गोमूत्रपाचितयावकस्य मासं पाने द्वादश प्राजापत्यानि। पाकोत्तरमीषद्गोमूत्रयुक्तपाने कृच्छ्रद्वयम्। त्रिंशन्नक्तैर्दशोपवासास्तत्र कृच्छ्रचतुष्टयम्। उपवासस्थान एको विप्रो भोज्यः। शक्तेन द्वौ। सहस्रगायत्रीजपो वा। द्वादश प्राणायामा वा। द्वादशवर्षिकादिषु द्वादशदिनैरेकैकप्राजापत्यकल्पना। अत एव चतुर्विंशतिमते--

कृत्वाऽवाग्ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत्।
प्रत्याम्नायो गवां देयः साशीतिर्धनिनां शतम्॥
तथाऽष्टादशलक्षाणां गायत्रीं वा जपेद्बुधः। इति।
गायत्र्यास्तु जपेत्कोटिं ब्रह्महत्यां व्यपोहति॥ इति।

द्वादशाब्दसमकक्षं न प्रत्याम्नाय इति बोध्यम्। त्रैमासिके सार्धसप्त प्राजापत्यानि। मासिके व्रते सार्धप्राजापत्यद्वयम्। मासं पञ्चगव्यपानेष्वेवम्। षडुपवासेऽप्येकं प्राजापत्यम्। मासं पयोव्रते सार्धप्राजापत्यद्वयम्। वृषभैकादशदशगोदानसहितत्रिरात्रोपवासात्मकगोवधव्रते सार्धैकादश त्रैमासिकगोवधव्रते सार्धसप्तेति स्मृत्यर्थसारे। योगीश्वरोक्तमासिकव्रते त्रीणि तत्सममेकं चान्द्रायणं चेति मिताक्षरा। यत्तु ब्रह्मवधोक्तद्वादशवार्षिकेऽशीत्युत्तरशतधेनवस्तावन्ति प्राजापत्यानि वेति प्राञ्चस्तत्प्रागुक्तचतुर्विंशतिमतविरुद्धमित्येके।

अथ कृच्छ्रस्थाने तीर्थप्रत्याम्नाया उच्यन्ते--भागीरथ्यां स्नानं षष्टियोजनागतस्य षडब्दकृच्छ्रसमम्। अत्र यात्रायोजनवृद्धौ योजनस्यार्धकृच्छ्रवृद्धिः। एकयोजनागतस्य मध्ये पर्वतादिव्यवधाने कृच्छ्रत्रयम्। तृतीयांशाधिकक्रोशादागतस्य भागीरथ्यां विध्युक्तस्नाने एकः कृच्छ्रः। प्रयागे द्विगुणं गंगाद्वारे गंगासागरसंगमे चैवम्। वाराणस्यामगणितम्। वाराणस्यां पातकं न प्रविशति। सर्वत्र यात्राभाषाभेदकृतदेशान्तरविषये महापर्वतव्यवधाने महा[नदी]व्यवधाने च क्रमेण द्वादशाष्टचतुर्योजनन्यूना षट्चतुर्द्वियोजनन्यूना वा। विंशतियोजनागतस्य यमुनासरस्वत्योः स्नानमब्दसमम्। अब्दद्वयसममित्यन्ये। मथुराद्वारवत्योर्द्विगुणम्। प्रभासेऽप्येवम्। दृषद्वतीशतद्रुविपाशावितस्ताशरावतीमरुद्वृधासिक्नीमधुमतीपयस्विन्यादिषु देवनदीषु स्नानं त्रिंशद्योजनागतस्याब्दसमम्। पञ्चदशयोजनागतस्येत्यन्ये। चन्द्रभागावेत्रवतीसरयूगोमतीदेविकाकौशिकीमन्दाकिनीपुनःपुनापूर्णापुण्याबाहुदावारुणीग-

ण्डक्यादिदेवनदीषु द्वादशयोजनागतस्य षोडश कृच्छ्राणि । एतासां परस्परसंगमे द्विगुणम्। त्रिगुणमित्यन्ये । अन्यासु समुद्रगासु नदीषु द्वादशयोजनागतस्य षट्कृच्छ्रसमम् । महानदेषु नद्यर्धं शोणनदे गंगार्धसमम्। पुष्करे प्रयागसमम्। संनिहित्यां नर्मदायां चतुर्विंशतियोजनागतस्य चतुर्विंशतिकृच्छ्रसमम् । कुब्जिकासंगमे द्विगुणम् । शुक्लतीर्थे चतुर्गुणम् । गोदावर्यां षष्टियोजनागतस्य त्र्यब्दसमम् । वंजराप्रणीतयोर्नर्मदावत् । पूर्णायां योजनार्धे कृच्छ्रः । कृष्णवेणीतुङ्गभद्रयोः प्रतियोजनं कृच्छ्रम् । पम्पायां द्विगुणम् । हरिहरे त्रिगुणम्। कुल्याः स्नानेन त्रिरात्रोपवासफलदाः। अल्पनद्यः कृच्छ्रफलदाः । नद्यो द्विकृच्छ्रफलदाः । उक्तान्यसर्वतीर्थेषु रामक्षेत्रश्रीरङ्गादिक्षेत्रेषु योजनसंख्यया कृच्छ्रसंख्या । एकयोजनादिषड्योजनगमन्ताः स्रवन्त्यः कुल्याः । द्वादशयोजनगा अल्पनद्यः । चतुर्विंशतियोजनगा नद्यः । तदधिकगा महानद्यः समुद्रगाश्च । उपवाससहितं नदीस्नानं कृच्छ्रसमं योजनादर्वागपि । शुनीगर्दभीचाण्डालीशूद्रीकष्टगा नद्यः पापनद्यश्च वर्ज्याः । सर्वत्र समुद्रस्नानं दर्शे कार्यम् । देवतासमीपे सरःसरिन्नदीसंगमेषु च सदा कार्यम् । समुद्रस्नाने पञ्चदशयोजनागतस्य पञ्चदश कृच्छ्राणीत्यादिस्मृत्यर्थसारे विस्तरः । परार्थे गन्ता तीर्थषोडशांशं लभते। प्रसङ्गेन। गन्ताऽर्धफलम् । अनुषङ्गेण तीर्थं प्राप्य स्नाने स्नानफलमेव [न] यात्राफलम् । पितामहभ्रातृमातामहपितृव्यमातुलश्वशुरपोषकार्थं गुर्वाचार्योपाध्यायार्थं तेषां पत्न्यर्थं पितृष्वसृमातृष्वस्रर्थं च स्नात्वा स्वयमष्टमांशं लभते । पित्रोरर्थे कुर्वन्पुत्रश्चतुर्थांशम् । दंपती च सपत्न्यश्च लभन्तेऽर्धं मिथः फलम्। अर्थिनां च न फलह्रासः । कर्कादौ मासद्वये निरन्तरं रजस्वला नद्यः । तास्वपि गोमती चन्द्रभागा सिंधुर्नर्मदा शरयूश्च त्रिरात्रम् । वापीकूपतडागादिषु स्थितपुराणोदकेषु त्रिरात्रम्। सरस्वतीगङ्गायमुनादयो न कदाऽपि रजस्वलाः ।

अथ व्रताङ्गभूता धर्मा यमा नियमाश्च । ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकौटिल्यमस्तेयमहिंसा माधुर्यं दमश्चेति दश यमाः । स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहगुरुशुश्रूषाशौचाक्रोधाप्रमादता इति नियमा दश ।

अथ प्रायश्चित्तपूर्वाहकृत्यम् ॥ केशनखादिवपनं कृत्वा स्नात्वा घृतं प्राश्य प्रदोषे गृहाद्बहिर्व्रतकालसंख्योल्लेखपूर्वकं संकल्पः कार्यः । वपनं च महापातकगोवधातिरिक्ते विद्वद्विप्रनृपयोः सधवस्त्रीणां नास्ति । तत्र सधवानां सर्वान्केशान्समुद्धृत्य द्व्यङ्गुलच्छेदनमेव तत् । तीर्थेष्वप्यासामेवमेव । विधवानां सर्ववपनम् । केशधारणेच्छायां द्विगुणितं कार्यम् । तत्र दक्षिणाऽपि द्विगुणा । वपनं च दिनत्रयसाध्यव्रते नखरोमच्छेदनमात्रम् । षड्दिनसाध्ये श्मश्रुणोऽपि नवदिनसाध्ये शिखावर्जम् । तदूर्ध्वं सशिखम् । त्रिषड्दिनयोः स्त्रीणां नैव तत् । धेनुदानादावप्येवं विशेष ऊह्यः । अस्य नैमित्तिकत्वात्सदा बद्धशिखेनेत्यनेनाविरोधः ।

प्रायश्चित्ते तिथयः—प्रायश्चित्तं चाष्टमीचतुर्दश्योर्न कार्यम् । चतुर्दश्यां संकल्प्यामायां कार्यमिति शिष्टाः । तत्र पापं द्विविधम् । रहस्यं प्रकाश्यं च । कर्तृव्यतिरिक्तैरज्ञातदोषं रहस्यम् । तत्र रहस्ये प्रायश्चित्तम् । प्रकीर्णकादिषु पञ्चविंशतिः प्राणायामाः । उपपातके शतम् । अनुपातके द्विशतम् । महापातके चतुःशतम् । सर्वत्राभ्यासे द्विगुणम् । मत्या त्रिगुणम् । मत्याऽभ्यासे चतुर्गुणम् । यद्वा गायत्र्या लक्षजपो महापापे । पादोनलक्षजपोऽतिपातके । अर्धलक्षमनुपातके । पादलक्षमुपपातके । तदर्धार्धं प्रकीर्णकादिषु । अत्राप्यभ्यासादौ द्वैगुण्यादि योज्यम् । अन्यान्यपि महापातकादिषु रहस्यप्रायश्चित्तानि विस्तरेण निबन्धेभ्यो ग्राह्याणि । अविद्वान्मुखान्तरेण व्याजात्प्रायश्चित्तं ज्ञात्वा रहसि चरेत् । विद्वांस्तु स्वयमेव ज्ञात्वा चरेत् । दशलक्षगायत्रीजपः सर्वपापप्रायश्चित्तम् ।

सर्वेषामेव पापानां संकरे समुपस्थिते ।
शतं सहस्रशोऽभ्यस्ता गायत्री पावनं महत् ॥

इति स्मरणात् । भस्माच्छन्नो भस्मशयानो रुद्रजापी सर्वपापान्मुच्यते । स चैकादशवारम् । सर्वशब्देन महापातकातिरिक्तं ग्राह्यमिति केचित् । महापापान्यपीत्यपरे । पुरुषसूक्तं प्रत्यहं षोडशकृत्वो जपन्मासेन गुरुतल्पादेरपि शुध्येत् । एवं पवमानजपाघमर्षणसूक्तजपादयोऽन्यतो ज्ञेयाः । अत्राऽऽहारविशेषानुक्तौ पयःप्रभृतयः शिलोच्चयादयो माघादयश्च देशकालौ । अथ रिक्तेषु व्याहृतिभिराचमनम् । एवं

ख्यापनानुतापाध्ययनान्यपि पापनाशकानि । ख्यापनं सभासु पुण्यस्थानेषु च स्वपापकथनपूर्वकमात्मनिन्दनम् । अध्ययनं वेदवेदान्तादेश्च । उपदिष्टप्रायश्चित्तेष्वेतदङ्गम् । न स्वतन्त्रम् । अन्यथा तद्विधिरफलः स्यात् ।

कृते पापेऽनुतापो वै यस्यः पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥
प्रातर्निशि तथा संध्यामध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षये नरः ॥

इति विष्णुपुराणे। अत्र केचित् । अनेन सर्वविधसर्वपापप्रणाशो भवत्येव । इह व्यवहार्यतासिद्धये वा तदुपदेश इति प्राहुः । गङ्गास्नानं च सर्वविधसर्वपापप्रणाशकम् ।

चान्द्रायणसहस्रं तु यश्चरेत्कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ ।
भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ।

इत्यादिमहाभारतादिवचनेभ्यः । न चैतान्यर्थवादाः ।

स्नानमात्रेण गङ्गायां पापं ब्रह्मवधोद्भवम् ।
दुराधर्षं कथं याति चिन्तयेद्यो वदेदपि ।
तस्याहं प्रददे पापं ब्रह्मकोटिवधोद्भवम् ।
स्तुतिवादमिमं मत्वा कुम्भीपाकेषु जायते ।
आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः ।

इति भविष्यकौर्मादिभ्यः ।

पापानां पापहन्त्री त्वं स्वर्गमोक्षैकहेतुता ।
स्वभाव एव गङ्गायाः शैत्ये शीतरुचेर्यथा ।
न गङ्गासदृशं तीर्थं न देवः केशवात्परः ।
ब्राह्मणेभ्यः परं नास्तीत्येवमाह पितामहः ।
सर्वं कृतयुगे तीर्थं त्रेतायां पुष्करं स्मृतम् ।
द्वापरे तु कुरुक्षेत्रे कलौ गङ्गैव केवलम् ।

गङ्गा कलियुगे स्मृतेति पाठान्तरम्।

येनाकार्यशतं कृत्वा कृतं गङ्गैव(गङ्गाम्बु)सेवनम्।
तत्सर्वं तस्य गङ्गाम्भो दहत्यग्निरिवेन्धनम्॥

इत्यादिवचनान्यनुसंधेयानि। कलियुग इत्थं पापनाशसामर्थ्यं गङ्गाया एव न तु पुष्करादीनाम्। त्रेतादौ तु पापस्याल्पत्वात्तन्नाशसामर्थ्यं तेषामपीति सर्वं कृतयुग इत्यस्य तात्पर्यम्।

अथ सर्वप्रायश्चित्तविधिः—तत्र महापातकादर्वाचीनेषु बहुविधेष्वज्ञानकृतेषु प्रतिनिमित्तं कर्तुमशक्तौ सर्वप्रायश्चित्तं षडब्दमत्यन्तगुणवतो विरक्तस्य। अभ्यासे द्विगुणम्। मत्या त्रिगुणम्। मत्याऽभ्यासे चतुर्गुणम्। अत्यन्ताभ्यासे निरन्तराभ्यासे वा पञ्चगुणम्। बहुकालाभ्यासे षड्गुणम्। उपपातकमारभ्यार्वाचीनेषु पापेष्वज्ञानकृतेषु प्रतिनिमित्तं कर्तुमशक्तौ द्व्यब्दं प्रायश्चित्तम्। अभ्यासादौ प्राग्वत्। प्रकीर्णकेषु तादृशेषु तादृशस्यैकाब्दम्। अभ्यासादौ प्राग्वत्। क्षुद्रपापेषु तादृशेषु तादृशस्य कृच्छ्रातिकृच्छ्रचान्द्रायणानि। तत्स्थाने द्वादश कायानि वा। अभ्यासादौ प्राग्वत्। चतुष्टयमिदं चोत्तमस्य। मध्यमस्य द्विगुणम्। अधमस्य त्रिगुणम्। द्वादशाब्दं द्विगुणं। महापातकावधिसकलपापप्रायश्चित्तमिति। सर्वत्रानुक्तनिष्कृतौ कृच्छ्रचान्द्रायणानि समस्तव्यस्तरूपेण योग्यतया योज्यानि। क्षुद्रेषु पापेषूपवासत्रिरात्रप्राजापत्यानि योग्यतया। अतिक्षुद्रेषु द्वादश षट्त्रिंशद्वा प्राणायामाः। स्त्रीशूद्राणाममन्त्रकास्ते। पुरुषकारहन्तकाराग्रदानानि वा। मौनलोपेषु विष्णुस्मरणम्।

अथ प्रकाशरूपेषूद्देशक्रमेण प्रकीर्णप्रायश्चित्तान्युच्यन्ते—खरेणोष्ट्रेण वा युक्तं यानमारुह्याध्वगन्ता नग्नस्वापी नग्नतयाऽन्नभोक्ता दिवा स्वदारगामी च सचैलस्नानपूर्वकं प्राणायामेन शुध्येत्। अमत्या स्नानमात्रम्। अभ्यासे प्राणायामचतुष्टयम्। चतुरधिकाभ्यास एक उपवासः। अत्यन्ताभ्यासे त्रिरात्रम्। साक्षात्खरोष्ट्रारोहिणां द्विगुणम्। गुरुं त्वंकृत्य हीनपुरुषं प्रयोज्य हुंकारपूर्वकच्छलवादैर्विप्रं निर्जित्य वस्त्रेणापि वा विप्रस्य कण्ठबन्धने तृणेनापि वा तस्य ताडने गुर्वादिकं शीघ्रं नत्वा विगतकोपं कृत्वा नक्तं भुञ्जीत। उपवसेदिति स्मृत्यर्थसारे।

अभ्यासे त्रिरात्रम् । गुरुदेवविप्राचार्यमातापितृनरेन्द्राणां प्रतिष्ठीवने प्रतिवाद आक्रोशनेऽतिक्रमे पैशुन्ये च जिह्वां दहेद्धिरण्यं दद्यात् । अभ्यासे सहस्रगायत्रीजपः । अमत्या तु प्राजापत्यं कृत्वा स्नात्वा गुरुप्रसादनात्पूतो भवति । शूद्रस्य विप्रातिक्रमादौ सप्तरात्रमभोजनम् । क्षत्रियातिक्रम एक उपवासः । विप्रं हन्तुं दण्डोद्यमने कृच्छ्रः । इदमेवावगुरणम् । दण्डनिपातनेऽतिकृच्छ्रः । रक्तस्रवणे कृच्छ्रातिकृच्छ्रः । अभ्यन्तररक्ते त्वग्भेदे च कृच्छ्रः । अस्थिभेदनेऽतिकृच्छ्रः । अङ्गकर्तने पराकः । केचित्तु दण्डोद्यमननिपातनरुधिरस्रावेष्वर्धकृच्छ्रकृच्छ्रातिकृच्छ्राणि । अन्ये पादकृच्छ्रार्धकृच्छ्रकृच्छ्राण्याहुस्तेषां कामाकामभेदेन व्यवस्था । अङ्गच्छेदने दशगोदानम् । कामतो द्विगुणम् । अत्र यद्यपि शोणितनिपातनयोः क्रमेण निपातनावगुरणे आवश्यके तथाऽपि तन्निमित्ते प्रायश्चित्ते पृथङ्न भवतः । तयोरवश्यंभावित्वेन तदभ्यन्तरवर्तित्वात् । यत्र पुनर्निमित्तानां नान्तर्भावनियमस्तत्र पृथग्भवत्येव । यथा पर्वणि परभार्यां रजस्वलां तैलाभ्यक्तो दिवा गच्छति जल इति । विप्रस्य पादप्रहार उपोष्य स्नात्वा प्रणिपत्य प्रसादनम् । पादेन स्पर्शे तु प्रसादनमेव । अप्सु चाग्नौ चाऽऽर्तस्य विण्मूत्राद्युत्सर्गे सचैलस्नानपूर्वकं गोस्पर्शः । मत्या तूपोष्य सचैलं स्नायात् । कामतोऽभ्यास उपवासत्रयम् । इदमापः प्रवहतेत्यस्य गायत्र्या वा जपश्च । अनापदि त्रिषवणस्नानं त्रिरघमर्षणं च बोध्यम् । अनार्तस्यात्यन्ताभ्यासे वा तप्तकृच्छ्रम् । उदकं विना मूत्राद्युत्सर्गेऽप्येवमेव । सर्वमिदं मूत्रपुरीषोत्सर्गोक्तं धर्ममात्रोपलक्षणम् । निर्जलारण्यादौ त्वपो दृष्ट्वैव शौचसचैलस्नाने कुर्यात् । मूत्रादिवेगधारणेऽष्टोत्तरशतजपः । श्रौतस्मार्तकर्मलोपे तूपवासः । इदं चातु क्रमायाश्चित्तविशेषश्रुतिस्मृत्युदितकर्मलोपे वा तत्तत्प्रतिपदोक्तप्रायश्चित्तसमुच्चयेन वा बोध्यम् । सूर्योदये स्वस्थो मत्या सुप्तो दिने तिष्ठन्सावित्रीं जपन्नुपवसेत् । सूर्यास्तमये सुप्तो रात्रौ तिष्ठन्सावित्रीं जपन्नाद्यात् । जीर्णमलवद्धवस्त्रधारणादिस्नातकव्रतलोपे तूपवासोऽष्टशतजपो वा । पञ्चमहायज्ञेष्वन्यतमलोपे त्वातुरस्योपवासो धनिनः कृच्छ्रार्धम् । आहिताग्नेः पर्वण्युपस्थानलोपे चैवम् । स्नानं विना भोजन एक उपवासो दिनं व्याप्य जपश्च । ऋतौ भार्यागमनलोपे कृच्छ्रार्धम् । अकामतः प्राणायामशतम् । इदं चापर्वणि संनिहि-

तस्यारोगिण एव षोडश्यां रात्रौ तु पर्वण्यपि गच्छेत्। स्वभार्यां पर्वण्यपि गछेत् । स्वभार्यां क्रोधादगम्येति वदतां वर्णानां क्रमेण कृच्छ्रनवरात्रषड्रात्रत्रिरात्राणि । सर्वेषां प्राजापत्यमिति गौडाः । त्यागानन्तरं संग्रहेच्छायामृषिचान्द्रायणं कृत्वा स कार्यः । एकपङ्क्त्युपविष्टानां स्नेहादिना विषमदाने दापने च प्राजापत्यम् ।

नदीसंक्रमकर्तुश्च कन्याविघ्नकरस्य च ।
समे विषमकर्तुश्च शुद्ध्यै चान्द्रायणं स्मृतम् ॥

संक्रम उदकावतरणमार्गः । पूजादौ मार्गादौ च समे विषमकर्तृत्वम् । अत्र चान्द्रायणं भैक्ष्यान्नेनेति स्मृत्यर्थसारे । पतितम्लेच्छादिभाषणे पुण्यकृतां ध्यानं विप्रेण सह भाषणं वा । भार्यान्नधनानां लाभस्य विघ्नकरणे प्रत्येकं संवत्सरव्रतम् । यज्ञोपवीतं विना भोजनेऽम्बुपाने च नक्तव्रतम् । अम्बुपाने त्रिः प्राणायामा वा । मत्या भोजने तूपवासः । उच्छिष्टस्य मत्या भोजनाम्बुपानयोरप्येवम् । यज्ञोपवीतं विना मत्या मूत्रादिकरणे भक्षणे चाष्टशतगायत्रीजपः । अकामत एषु क्रमेण त्रिषट्प्राणायामनक्तव्रतानि । 'यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः। सद्यः स्नानं प्रकुर्वीत' । अम्बुनि स्वप्रतिबिम्बदर्शने मयि तेज इति मन्त्रं जपेत् । अशुचिद्रव्यस्पर्शे वाक्पाणिपादचापल्यकरणे कामकृते निष्प्रयोजनेनानृतवदने च गायत्रीजपः । अकामकृते त्वाचमनम् । अत्यल्पे दक्षिणकर्णस्पर्शो जलाभावे वा । शय्यारूढ १ पादुकोपानदारोपितपादो २ भयोच्छिष्टा ३ न्धकारस्था ४ शुद्ध ५ जपकृत् ६ होमकृत् ७ श्राद्धकार ८ समित्पुष्पकुशाग्न्यम्बुगन्धाक्षतान्नपाणिभैक्ष्याज्यपाणिदेवपूजानिरतानामभिवादने त्रिरात्रमुपवासः । एतैरन्याभिवादन एषामप्येवम् । आह्निकविच्छेदेऽपि त्रिरात्रम् । बहुदिवसविच्छेदे द्विगुणम् । निमन्त्रितस्यान्यत्र भोजने त्रिरात्रम् । अकामतः सकृत् । निमन्त्रितस्य भोजनाद्यदाने यतिचान्द्रायणम् । इन्द्रधनुःपलाशाग्न्योरन्यस्य प्रदर्शने उपवासो धनुर्दण्डश्च क्रमेण दक्षिणा । दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् । त्रिरात्रं पुरोहितः । अदण्ड्यदण्डने कृच्छ्रं पुरोहितः । त्रिरात्रं राजा ।

पादप्रतापनं कृत्वा कृत्वा वह्निं तथा ह्यधः ।
कुशैः प्रमृज्य पादौ तु दिनमेकं गृही भवेत् ॥

भूमिकन्यानृते मासं गोमूत्रयावकपानम् । दुःस्वप्नारिष्टयोर्दर्शने सघृतहिरण्यदानम् । विप्रयोर्विप्राग्न्योर्दम्पत्योर्गोविप्रयोर्विप्रपिण्डयोर्गोबलीवर्दयोर्विष्णुगरुडयोर्मध्यगमने य×द्द्विजस्य सांतपनम् । वेदाध्ययनहोमसांनाय्याङ्गदोहविवाहकालेष्वेषामन्तरागमने चान्द्रायणम् । कुनखिवश्यावदन्तौ प्राजापत्यं कृत्वा दन्तान्नखांश्चोद्धरेयाताम् ।

क्षत्रियस्तु रणे पृष्ठं दत्त्वा प्राणपरायणः ।
संवत्सरव्रतं कुर्यात् ।

एतदेव फलप्रदवृक्षच्छेदे च । तीर्थयात्रां विना–

सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गान्ध्रान्गत्वा संस्कारमर्हति ॥

एवं मगधदेशेऽपि । कर्मनाशाजलस्पर्शकरतोयाविलङ्घनगण्डकीबाहुतरणेष्वप्येवम् । नीलवस्त्रादिधारणे केशनिर्मितधारणे चोपवासः पञ्चगव्यपानम् । हिरण्योदकपानं च परेद्युः । नीलीमध्यगमने त्रयः प्राणायामाः । नीलीजदन्तधावने वस्त्रधारणवत् । रोमकूपेषु नीलीरजःपतने वर्णमात्रस्य तप्तकृच्छ्रम् । नीलीं विक्रीणन्पालयंस्तद्वृत्त्या जीवंश्च पतति । विरक्तश्चेत्त्रिभिः कृच्छ्रैः शुध्येत् । नीलीं धृत्वा मैथुन उत्पन्नो गर्भश्चाण्डालो भवति । नीलीं धृत्वा मृतः षष्टिवर्षाणि विष्ठायां कृमिर्भवति । विधवया नीलीधारणे तद्भर्तुर्नरकः । नीलीधारणपूर्वकमन्नदाने दातुर्भोक्तुश्च सांतपनम् । नीलीदारुभेदनेन रुधिरदर्शने चान्द्रायणम् ।

स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति ।
कम्बले पट्टसूत्रे च नीलीसङ्गो न दुष्यति ॥

आपङ्क्त्येयपङ्क्तिभोजन उपवासः । परेद्युः पञ्चगव्यं च । प्रत्यर्कादिमेहन आत्मनः शकृद्दर्शने च सूर्यं विप्रं गां वा पश्येत् । क्षत्रियवैश्ययोरभिवादने विप्रस्योपवासः । शूद्रस्याभिवादने त्रिरात्रमुपवासः ।

× यच्छब्दोऽधिकः ।

गृहस्थस्यानापदि सिद्धान्नभिक्षाकरणे दशरात्रं वज्रकृच्छ्रसंबन्धिद्रव्य-पानम् । आपदि त्र्यहम् । देवगुर्वाद्यभिमुखनिष्ठीवने जीवन(ना)विरोधेन जिह्वां दहेद्धिरण्यं दद्यात् । प्रतिमाभेदने देवालयवापीकूपारामभेदने चेदं विष्णुर्मानस्तोके विष्णोः कर्माणि पादोऽस्येति चतस्र आज्याहुतीर्हुत्वा यां देवतामुच्छेदयति तस्या एव ब्राह्मणान्भोजयेत् । प्रतिमाऽत्र मृन्मयी पूजितोज्झिता च । प्रायश्चित्तस्याल्पत्वात् । तदत्र प्रतिमातारतम्येन दण्डप्रायश्चित्ताधिक्यं योज्यम् । दारिद्र्यक्रोधमात्सर्यादिना भर्तुरतिक्रमेऽतिकृच्छ्रः । पर्वणि मैथुने सचैलं स्नात्वा वारुणीभिर्मार्जयेत् । श्राद्धदिने मैथुने उपवास एव । स्वपत्न्यां रजस्वलायां गत्वोपवासत्रयपूर्वकं चतुर्थे[ऽहनि] घृतप्राशनम् । कामतश्चेत्सप्तरात्रमुपवासः । अकामतोऽभ्यासे कृच्छ्रः । कामतोऽत्यन्तानवच्छिन्नाभ्यासे नवमासिकव्रतम् । त्रैवार्षिकमिति स्मृत्यर्थसारे । कामतोऽभ्यासमात्रे तु प्रथमेऽह्नि पराकम् । द्वितीये सांतपनम् । तृतीये प्राजापत्यमिति । अकामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तस्य सचैलं स्नानं महाव्याहृतिभिर्होमश्च । षण्मासोत्तरं गर्भिणीगमनेऽप्येवम् । यदा तु स्त्रीसंभोगमन्तरेणाप्यकामतो हठाच्चरमधातुविसर्गस्तदा स्कन्नं रेतो यन्मह्यं रेतः पृथिवीं पुनर्मामैत्वित्यभिमन्त्र्य तेन रेतसा स्तनयोर्भ्रुवोश्च मध्यमनामिकया स्पृशेत् । कामतः प्राणायामत्रयसहितसहस्रगायत्रीजपः । वानप्रस्थयत्योश्चान्द्रायणम् । गृहस्थस्य यत्नपूर्वकं धातुविसर्गे वारुणीभिर्मार्जनमित्यपि क्वचित् । स्वप्ने तु त्रिनमस्काराः सूर्यस्य गृहस्थैः कार्याः । तयोस्त्वघमर्षणत्रयम् । ब्रह्मचारिणस्तु स्वप्ने रेतःस्खलने स्नात्वाऽर्कं संपूज्य त्रिः पुनर्मां मैत्वृचं जपेत् । कामत उत्सर्गे संवत्सरव्रतं चरेत् । भयेन रोगेण स्वप्ने गृहस्थादीनां स्खलन आदित्यार्चनादि पूर्ववत् । नैष्ठिकब्रह्मचारिणो द्विगुणम् । वमने स्नात्वा पञ्चगव्यपानम् । पूर्वदिनभुक्तस्य वमन उपवासोऽपि । मांसमाष[म]सूरवमन उपवासत्रयं स्नानपूर्वकप्राणायामत्रयं घृतप्राशनं च । दिवास्वापनग्नस्त्रीदर्शननग्नस्वापश्मशानाक्रमणहयारोहणपूज्यपूजातिक्रमाजीर्णश्मश्रुकर्मदुर्जनस्पर्शेषु स्नानम् । कामतो नक्तभोजनम् । गर्भाधानादिचूडान्तसंस्कारेष्वेकैकलोपे पादकृच्छ्रम् । चूडाया अर्धकृच्छ्रम् । अनापदि द्विगुणम् । प्रायश्चित्तोत्तरं तत्तत्संस्कारकरणम् । गर्भाधानमात्राकरणे गोदानपूर्वकं पुंसवनं कार्यम् । संव-

त्सरं नित्यक्रियालोपे तु षष्टिः प्राजापत्यानि। आक्रोशनानृतवादयोरेक-त्रयो वा उपवासाः। अकामतोऽभ्यासे तप्तकृच्छ्रम्। निषिद्धकाष्ठैर्दन्तधावने गोदर्शनम्। गृहीतव्रतस्य प्रमादादिना भङ्ग उपवासत्रयं पुनर्व्रतग्रहणं च। विप्रस्याष्टवर्षपर्यन्तं क्षत्रवृत्त्या धनार्जने चान्द्रायणम्। वैश्यवृत्तौ षण्मासान्। शूद्रवृत्तौ तु सकृदेव पुनरुपनयनपूर्वकं कृच्छ्रम्। शूद्रस्य द्विजकर्मकरणेऽप्येतत्। तद्धनत्यागोत्तरमिदं प्रायश्चित्तम्। स्त्रीधनोपजीवने स्त्रियै तद्धनं दत्त्वा चान्द्रायणम्। भार्याया मुखमैथुने कृच्छ्रम्। गोयुक्तयानस्थस्य मैथुने तदर्धम्। अकामतोऽभ्यासे स्नानमात्रम्। बस्तिकर्मणि प्रच्छर्दनविरेचनयोरभ्यासे शिशुकृच्छ्रः। अन्यतः स्नानम्। देवागारशिलादिना स्वगृहकरणे कृच्छ्रं यतिसांतपनं च। गुरुप्रतिश्रुतवस्त्वकरणे तप्तकृच्छ्रसहितं चान्द्रायणम्। भोजनकाले परिगृहीतमौनत्यागे तदन्नत्यागः। अर्धभुक्तान्नपात्रेण जलपाने पशुवन्मुखेन जलपाने चोपवासः। इष्टापूर्तादिशुभाशुभमहाकर्मस्थऋत्विगाचार्यादीनां द्वादश कृच्छ्रास्तदर्धं वा सर्वप्रायश्चित्तम्। श्राद्धोपवासादिनिषिद्धदिनेषु दन्तधावने गायत्रीशतसंयु(पू)ताम्बुपानम्। कन्याया विवाहात्पूर्वं रजोदर्शने तत्पिता तदृतून्गणयित्वा तत्संख्यया गोदानं कृत्वाऽशक्तावेकां गां सुवर्णशृङ्गादिगोदानविधिना दत्त्वाऽत्राप्यशक्तौ सदक्षिणमन्नं विप्रेषु दत्त्वा त्रिदिनमुपोषितां चतुर्थरात्रौ गव्यपयोमात्राहारां कन्यां निवृत्तरजस्कां भूषितां दद्यात्। तामुद्वहन्वरस्तच्छुद्ध्यै कूष्माण्डमन्त्रैर्घृतं जुहुयात्। विवाहहोमकाल उपस्थित आरब्धे विवाहे वा रजोदर्शने तु स्नापयित्वा तां युञ्जानेति तैत्तिरीयमन्त्रेण हुत्वा विवाहं प्रवर्तयेत्। सुरापात्रगन्धमाघ्राय सोमपो ब्राह्मणोऽप्सु निमग्नस्त्रीन्प्राणायामांस्त्रिरघमर्षणजपं वा कृत्वा घृतप्राशनं कुर्यात्। असोमपोऽनप्सु। इतरस्यामन्त्रकं प्राणायामाः। मद्यगन्धने तदर्धम्। साक्षात्सुराघ्राणं सुरापानवत्। अमत्याऽऽघ्राणे प्राणायामास्त्रयः। मद्यविण्मूत्रपूतिगन्धानामन्यतमाघ्राणे त्रिः प्राणायामाः। दर्शने स्पर्शने च स्नानं घृतप्राशनं च। सुरापस्पर्शे स्नानं पञ्चगव्यं च। तद्घ्राणेऽप्सु त्रिः प्राणायामाः। असोमपस्यानप्सु। इतरस्यामन्त्रकम्। मद्यविण्मूत्रविप्रुड्भिः संस्पृष्टे मुखमण्डले मृत्तिकागोमयैः प्रक्षाल्य पञ्चगव्यं पिबेत्। मदिरां दत्त्वा स्पृष्ट्वा प्रतिगृह्य च

स्नात्वा कुशाम्बु त्र्यहम्। संक्रान्त्यादिनिमित्तेष्वस्नात्वा भोजनेऽष्टसहस्रं गायत्रीजपः। शूद्रादिस्पर्शनिमित्ते तूपवासः। चाण्डालादिस्पर्शनिमित्ते स्नात्वा भुक्तौ त्रिरात्रं कार्यं वा। मत्या चान्द्रं सकृत्। कामाभ्यासे द्विगुणम्। रजकादिस्पर्शनिमित्ते तदर्धम्। पाने त्वेक उपवासः। चाण्डालादिरजकादिस्पृष्टस्पर्शनिमित्ते त्वस्नात्वा भोजन उपवासः। नित्यस्नानमकृत्वा भुक्तावुपवासस्त्रिरात्रं वा। नैमित्तिकस्नाने सर्वत्राष्टशतगायत्रीजपः। कामकृते सहस्रत्रयम्। अमेध्यास्पृश्यस्पर्शने त्वस्नात्वा भुक्तौ गृहस्थादेस्त्रिरात्रम्। मत्या षट्त्रिरात्रम्। व्रतिनः कार्यं चान्द्रं वा। श्वपाकादिस्पर्शनिमित्तेष्वस्नात्वा भुक्तौ मत्या त्रिरात्रम्। हस्तस्थापितकवलादिभोजनेऽब्राह्मणसमीपभोजने दुष्टपङ्क्तौ भोजने बालांस्त्यक्त्वा भोजने शूद्रहस्तेन भोजने पाने चामत्या नक्तम्। मत्या तूपवासः पञ्चगव्यं च। शूद्रपङ्क्तौ भोजने द्विरुपवासः।

आसनारूढपादो वा वस्त्रार्धं प्रावृतोऽपि वा।
मुखेन धमितं वाऽपि भुक्त्वा सांतपनं चरेत्॥

अनाचम्य भक्षणेऽष्टशतजपः। भोजने तूपवासः। आपोशनं विना भोजनेऽप्येवम्। अभ्यासे सहस्रगायत्रीजपः। भोक्तुकामस्याऽऽपोशनात्पश्चादभ्यवहारात्पूर्वं मूत्रपुरीषगमने सचैलो बहिराप्लवः षट् प्राणायामाश्च। भुञ्जानस्य मस्तके विष्ठादिपतनेऽन्नं त्यक्त्वा नद्यां स्नानं त्रिः प्राणायामाः। भार्यया सहोदरैर्वा सहभोजने दिनत्रयमभोजनम्। ज्ञातिभिः सह भोजने त्वहोरात्रम्। ऋतौ भूमौ भोजनेऽहोरात्रं यावकाहारः पञ्चगव्यपानं च। घृतहीनाहुतिपञ्चकभोजनोत्तरं सघृतभोजनात्यन्ताभ्यासे चान्द्रायणम्। चाण्डालश्वपचक्षत्तोग्रसूतवैदेहकमागधायोगवाश्चाण्डालाद्याः—विप्रायां शूद्राज्जातश्चाण्डालः। क्षत्तुरुग्रायां जातः श्वपचः। क्षत्रियायां शूद्राज्जातः क्षत्ता। राजन्याच्छूद्रायां जात उग्रः। विप्रायां वैश्याज्जातः सूतः। विप्रायां क्षत्रियाज्जातो वैदेहकः। क्षत्रियायां वैश्याज्जातो मागधः। वैश्यायां शूद्राज्जातोऽयोगवः। शौण्डिकादयश्च—कापालिकनिर्णेजकधातुकलुब्धकान्त्यजाः।अन्त्यजाश्च—चर्मकाररजकनटबुरुडकैवर्तकमेदभिल्लाः सप्त। सूतिकारजस्वलापतितशववाहकषण्ढदेवलकविसृष्टाग्न्यारूढपतिताभिशस्ता अन्त्यजाश्च श्वादयश्चान्त्यजाद्याः। श्वविट्वराहखरोष्ट्राद्याः श्वादयः। एषामेव पञ्चमा इति संज्ञा।

गोमांसभक्षको यस्तु विरुद्धं बहु भाषते ।
सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥

स एव यवनदेशोद्भवो यावनः । तत्र भुक्तिसमये चाण्डालान्त्यजादिदर्शने आचमनपूर्वकप्राणायामत्रयं भोजनत्यागे सति । तदत्यागे तूपवासः पञ्चगव्यं च। मूत्राद्युत्सर्गवेलायां भोजने पान उपवासो व्याहृतिभिः सर्पिषाऽष्टोत्तरशतहोमः। काञ्जिकादिना शौचं कृत्वा भोजने पुनर्जलेन शुद्धिं कृत्वोपोष्य पञ्चगव्यं पिबेत् ।

एकपङ्क्त्यां तु भुञ्जानो विप्रो विप्रं यदा स्पृशेत् ।
शिष्टं तदन्नं भुक्त्वैव गायत्र्यष्टशतं जपेत् ॥

शिष्टं पात्रस्थितम् । तदुत्तरं भुक्तेर्विरामः । भोजनोत्तरमुच्छिष्टयोः स्पर्श उभयोरपि सद्यः स्नानं शतजपो वा । तादृशस्य क्षत्रियवैश्यस्पर्शे क्रमेण नक्तोपवासौ । नक्तं घृतप्राशनमेव । स्नानं जपश्चेति स्मृत्यर्थसारे। भोजनोत्तरमेव तयोः स्पर्शे उपवास उपवासौ वा। भुक्तोच्छिष्टस्य शूद्रश्वादिस्पर्शे तूपोष्य परेद्युर्नक्तम् । परेद्युः पञ्चगव्यपानम् । भुक्त्वाऽनाचमनेऽपीदम् । इदं कामतः । अकामतस्तु स्नानं शतगायत्रीजपश्च । भुक्तोच्छिष्टानाचान्तस्यामेध्यमूत्रादिस्पर्शे पञ्चगव्यपानम् । उच्छिष्टस्य चाण्डालादिस्पर्शे त्रय उपवासा अष्टाधिकशतगायत्रीजपश्च । चतुर्थे पञ्चगव्यं च मिलित्वा पादोनप्राजापत्यम् । ज्ञात्वा बलात्स्पर्शे द्विगुणम् । अन्ये तु त्वनुच्छिष्टस्य चाण्डालादिस्पर्शे स्नानम् । उच्छिष्टस्य तत्स्पर्शे पूर्णं प्राजापत्यम् । ज्ञात्वा तु द्विगुणमित्याहुः । उच्छिष्टस्य चाण्डालान्नस्पर्शे चान्द्रायणम् । अधरोच्छिष्टे त्रिरात्रम् । भुक्तोच्छिष्टस्यानाचान्तस्यान्त्यजशौण्डिकादिभिर्ज्ञानतः स्पर्शे प्राजापत्यम् । अर्धोच्छिष्टे पादः सर्वत्र । येनाऽऽस्ये ग्रासः क्षिप्तो न निगीर्णः सोऽर्धोच्छिष्टः । भुक्तोच्छिष्टस्य रजकादिस्पर्शे त्रिरात्रं घृतप्राशनम् । मूत्राद्युत्सर्गोत्तरमकृतशौचोऽधरोच्छिष्टः । भोजनाद्युत्तरमनाचान्त ऊर्ध्वोऽच्छिष्टः । तत्राधरोच्छिष्टस्य विप्रस्य चाण्डालादिस्पर्शे त्रिरात्रोपवासपूर्वकं पञ्चगव्यम् । तस्य रजस्वलारजकादिस्पर्शे एक उपवासः । अनुक्तेषु यत्रानुच्छिष्टस्पर्शे स्नानं विधीयते तत्रोच्छिष्टस्पर्शे त्रिरात्रं कार्यं वा। ऊर्ध्वोच्छिष्टार्धमधरोच्छिष्ट इति कल्प्यम्। भुञ्जानस्य रजस्वलादिस्पर्शे शिशुकृच्छ्रः प्राणायामशतं च ।

अमत्या त्र्यहम्। भुञ्जानस्य गुदस्रावे शौचं कृत्वोपोष्य पञ्चगव्यम्। भुञ्जानस्याशौचप्राप्तौ मुखस्थग्रासं त्यक्त्वा स्नानम्। तद्ग्रासाशन उपवासः। सर्वाशने त्रिरात्रम्। भुञ्जानस्यानुच्छिष्टेन सगोत्रेणासगोत्रेण वा स्पर्शे भोजनाद्विरम्य शुद्धिः। भुञ्जानस्य भुक्तोच्छिष्टेन सवर्णेन स्पर्शे स्नानं जपो वा। भुञ्जानस्य शूद्रस्पर्शे उपवासः पञ्चगव्यं च। भुञ्जानस्य चाण्डालादिशब्दश्रवणे भोजनाद्विरम्य शुद्धिः। भोजने स्नात्वाऽष्टशतजप उपवासो वा। मूत्रादिकालेऽन्त्यजादिस्पर्शे तु—

दिनमेकं चरेन्मूत्रे पुरीषे च दिनद्वयम्।
दिनत्रयं मैथुने च पाने स्यात्तु चतुष्टयम्॥

एवं रजस्वलाश्वसूकरशवमद्यभाण्डादिस्पर्शेऽपि। चाण्डालादिस्पर्शे सार्धमेतत्। द्विगुणमित्यन्ये। उच्छिष्टस्य तलाभ्यक्तस्य कृतश्मश्रुकर्मणः कृतमैथुनस्य चाऽऽचमनं विना मूत्रादिकरण एकोपवासस्त्रिरात्रं वा। ऊर्ध्वोच्छिष्टस्य श्वकाकादिविष्ठास्पर्शे उपवासः। अधरोच्छिष्टे स्नानम्। उच्छिष्टस्य सूर्यादिदर्शन उपवासः। ऊर्ध्वोच्छिष्टस्य पलाण्डुलशुनादिस्पर्शे त्रिरात्रं कुशजलपानं गायत्रीजपश्च। अकामत उपवासद्वयम्। अधरोच्छिष्टस्य तत्स्पर्शे एक उपवासः। अनुच्छिष्टस्य तत्स्पर्शे स्नात्वा नक्तम्। सर्वाङ्गावच्छिन्नस्पर्शे एकनक्तमिति केचित्। सुराया ईषत्स्पर्शेऽप्येतदेव। जान्वधः सुरास्पर्शे स्नानम्। तत आनाभेरुपवासः। तत ऊर्ध्वं स्पर्शे त्रिरात्रम्। अशुचिलशुनादिस्पृष्टिस्पर्शने तु—

अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति।
तं स्पृष्ट्वाऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः॥ इति।

एवं भाण्डेष्वपि स्पृष्टभाण्डस्पर्शे योज्यम्॥

स्त्रीबालवृद्धमक्षिकागृहमार्जारमूषकादयो नित्यं शुद्धाः। उच्छिष्टकाले कर्मानुष्ठाने च मार्जारस्पर्शे स्नानमिति मिताक्षरा। पीतावशिष्टमुखनिर्गततोयपाने मत्याऽभ्यासे चान्द्रं पराको वा। पीतावशिष्टपात्राम्बुपाने वामहस्तेन वा पाने तदर्धं त्र्यहं वा। अज्ञानात्सकृच्छूद्रोच्छिष्टभोजने त्रिरात्रोपवासः। चतुर्थे पञ्चगव्यपानम्। सप्ताहं

पञ्चगव्यं कामतः। एतदेव योषोच्छिष्टभोजनेऽपि। क्षत्रियाद्युच्छिष्टभोजने पादोनम्। अकामतोऽभ्यासे चान्द्रम्। कामतो द्विगुणमभ्यासे। भार्यया सह भोजने तदुच्छिष्टभोजने च दोषाभाव आपद्विषयो विवाहविषयो वा। ज्येष्ठभ्रातृपित्राद्युच्छिष्टभक्षणे दोषो न। विप्रोच्छिष्टाशन एकाहः। कामतोऽभ्यासे कृच्छ्रम्। उच्छिष्टमत्र तद्भोजनोत्तरभोजनपात्रेऽवशिष्टम्। चाण्डालस्पृष्टकांस्ये चाण्डालाद्युच्छिष्टकांस्ये च भोजने कृच्छ्रम्। जलपाने पादकृच्छ्रम्। रजकादावर्धम्। चाण्डालेन सहैकवृक्षमारुह्य तत्र फलभक्षणे सचैलं स्नानम्। चाण्डालादिस्पृष्टभोजने त्रिरात्रं मत्या कायम्। चाण्डालादिहस्तपाचितभोजने कायं चान्द्रं च। तद्धस्तेन भोजने द्विगुणम्। चाण्डालाद्युच्छिष्टभोजने चतुर्गुणम्। अभ्यासे कृच्छ्राब्दम्। अत्र सर्वत्र चाण्डालान्नभोजने पुनःसंस्कारः। चाण्डालादिदृष्टान्ने तूपवासः पञ्चगव्यं च। चाण्डालादिस्पृष्टाम्बुपान उपवासः। तत्स्पृष्टस्पृष्टिविषये तदर्धम्। चाण्डालादिसंस्कारे भोक्तुः पक्षं गोमूत्रयावकं कृच्छ्रं वा। चाण्डालादिर्यस्य गृहेऽज्ञातस्तिष्ठति तस्यान्नममत्या भुक्त्वा प्राजापत्यम्। मत्या पराकः। चाण्डालादिभाण्डसंस्पृष्टाम्बुपाने गोमूत्रयावकं त्रिरात्रं पुनःसंस्कारश्च। शूद्रोदकपान उपोष्य कुशपलाशबिल्वोदकपानम्। चाण्डालादिस्पर्शोत्तरं मूत्राद्युत्सर्गे त्रिरात्रमुपवासो जातवेदसजपो वा। रजकादिस्पर्शोत्तरमधरोच्छिष्टे तूपोष्य पञ्चगव्यम्। रजस्वलासूतिकाश्च सूकरादिपतितकुणिकुष्ठिकुनख्यस्पृश्याशौचिनः स्पृष्ट्वा भोजन एतत्स्पृष्टान्नभोजने च मत्या काकायम्। अमत्याऽर्धम्। कुणिर्हस्तविकलः। भोजनकालेऽन्नममेध्यमक्षिकाकेशादिदूषितं चेदनन्तरमपः स्पृशेत्। तच्चान्नं भस्मना मृदाऽम्बुना वा स्पृशेत्। अस्थ्यादिदूषिते स्नानं घृतप्राशनं च। भोजनकाले दन्तपाते चैवम्। रक्तादिदृष्टौ तूपवासः। मुखे रक्तदर्शने त्रिरात्रम्। तद्भक्षणे ब्राह्मीरसपानम्। तादृशजलपाने कुशोदकम्। अशक्त एषु निमित्तेषु ब्राह्मीं पिबेत्। अमेध्यकेशकीटकादिभिः सह पाचितान्नस्य त्यागः। भक्षेण तूपवासः पञ्चगव्यं च। वामहस्तदत्तान्नभोजन एकपङ्क्तावेकस्मिन्नुत्थिते पश्चाद्भुक्तौ चोपवासो नक्तं पञ्चगव्यं च। मार्जारकाकाखुनकुलगवाद्युच्छिष्टस्याल्पस्य भोजने ब्राह्मीरसः। अधिकभोजन उपवासः। पूर्णाहारे त्रिरात्रम्। कामतः कृच्छ्रपादः। अभ्यासे कृच्छ्रः।

श्वोच्छिष्टभोजने मासं यावकव्रतम् । विप्रस्य शूद्रगृहे भोजने मनस्तापाच्छुद्धिः । कामतश्चेद्द्रुपदायाः शतजपः । शूद्रभाजनभिन्नभाजनयोर्भोजन उपवासः पञ्चगव्यं च । मत्या त्रिरात्रम् । भिन्नकांस्येऽमत्या त्रिरात्रम् । मत्या कायम् । वटार्काश्वत्थकुम्भीतिन्दुककोविदारककदम्बवल्लीपलाशब्रह्मवृक्षपत्रेषु भोजने चान्द्रम् । पद्मपत्रे वानप्रस्थयत्योश्चान्द्रफलम् । अन्येषां चान्द्रप्रायश्चित्तम् । दुग्धाज्यादिपेयद्रव्यहस्तस्योच्छिष्टेन स्पर्शे तद्द्रव्यसाहित्येनाऽऽचमनाच्छुद्धिः । चाण्डलस्योच्छिष्टदानेऽपि द्विरुपवासः ।

शूद्रेण च्छिन्नयज्ञोपवीतो ब्राह्मणो मन्त्रेणान्यत्तु परिधायोपवसन्गायत्रीशतं जपेत् । ज्ञानतो द्विगुणम् । एवमन्यत्राप्यनादेशे शतगायत्रीजपः । विप्रेण च्छिन्नयज्ञोपवीतो विप्रोऽन्यत्तु परिधाय मनस्तापेन शुध्येत् । ज्ञानतस्तूपवासः । श्वचाण्डालादिच्छिन्नयज्ञोपवीते महासांतपनद्वयम् ।

चाण्डालादिपुल्कसम्लेच्छभिल्लपारसीकमहापातकिबौद्धशैवपाशुपतलोकायतिकनास्तिकोन्मत्तान्त्यजनापितविकर्मस्थद्विजोदक्यासूतिकापतितशवस्पृष्टिशावसूतिकचैत्ययूपमृतहारककापालिकवनमार्जारस्पर्शे सचैलं स्नानम् । कामतस्त्वग्निस्पर्शनघृतप्राशनमधिकम् । अत्र शैवपाशुपतौ वेदविरुद्धतदागमोक्तानुष्ठातारौ । रजकचर्मकव्याधकैवर्तशाकुनिकनटधीवरजालोपजीविनिर्णेजकसौत्रिकशैलूषसर्ववर्णगवनिताचक्रध्वजिवध्यघातिश्वगर्दभग्रामसूकरकुक्कुटैः शिरोव्यतिरिक्ताङ्गस्पर्शे तदङ्गक्षालनवस्त्रक्षालनपूर्वकमाचमनम् । शिरःस्पर्शे स्नानम् । कामतः स्पर्शे द्वादशवारं मृज्जलैः शोधनमधिकम् । इदं सर्वमनातुरस्य । आतुरस्य त्वाचमनमेव । चाण्डालादिस्पर्शेऽप्येतत् । शूद्रनिषादस्पर्शे आचमनम् । स्मृत्यर्थसारे तु शूद्रस्पर्शे स्नानम् । निषादस्पर्शे सचैलस्नानमिति । चिर कालं चाण्डालादिच्छायारोहणे स्नानं घृतप्राशनं च । तल्लङ्घनेऽप्येवम् । हीनशूद्रस्पर्शे स्नानम् । प्रागुक्तचाण्डालादिभिर्व्यवहितस्पर्शे स्नानमेव । इदं मतिपूर्वत्वे सचैलमन्यत्राचैलम् । काष्ठादिद्वारेण तत्स्पर्शे यदङ्गस्पर्शस्तदङ्गस्य वस्त्रादेश्च क्षालनमाचमनं च । नौसंक्रमादौ न स्पर्शदोषः । सर्वाङ्गावच्छेदेन चाण्डालादिस्पर्शे

त्रिरात्रमुपवासः । चाण्डालादिभिरेकशाखारोहणे विप्रस्य सचैलस्नानम् । कामतोऽष्टशतजपश्च । अभ्यासे तूपवासपूर्वकं पञ्चगव्यपानम् । एकपाषाणावरोहणे शाखावत् । चाण्डालादिस्पर्शे रात्रावपि स्नानम् । तच्च दिवोद्धृतजलेनाग्निसंनिधौ स्वर्णं जले निक्षिप्य कार्यम् । चाण्डालशवस्पर्शे कृच्छ्रः । चाण्डालादिभिर्यानशय्यासनादौ त्रिरात्रोपवासः ।

विप्रेण चाण्डालस्य व्रणबन्धनाभ्यञ्जनरुधिरोत्पादनादौ विप्रस्य प्राजापत्यम् । चाण्डालेन विप्रस्यैषु कृतेष्वप्येवम् । अनभ्यासे त्रिरात्रम् । अभ्यक्तस्य चाण्डालादिस्पर्शे एकोपवासपूर्वकं पञ्चगव्यम् । चाण्डालाय कामतः ऋतुप्रदर्शने तन्नृत्यदर्शने तद्गीतश्रवणे भैषज्यक्रियायां च द्विरुपवासः । चाण्डालादिदर्शने रविदर्शनपूर्वकं पञ्चदश प्राणायामा अभ्यासे । अन्यथा रविदर्शनमेव । चैतन्यव्यवधानेन स्पर्शे स्नानम् । काष्ठादिव्यवधानेन स्पर्शे तदङ्गक्षालनमुक्तम् । एकशाखापाषाणयोरारोहणे तु स्नानम् । वचनादेव तैः संभाषणेऽष्टोत्तरशतगायत्रीजपः । अमत्या चेद्विप्रसंभाषणम् । चाण्डालाद्युपदेशे प्राजापत्यम् । चाण्डालकूपतीर्थनिषेवणे त्रिरात्रम् । चाण्डालेनैकपथगमने गायत्रीस्मरणमल्पकालसाध्ये । अन्यथा सचैलस्नानम् । चाण्डालादेः स्ववेश्मन्यवस्थाने त्र्यहं दधिसर्पिःपयोभिः सह गोमूत्रयावकपानं त्रिसंध्यमवगाहनेन । ततस्त्र्यहं दध्ना । ततस्त्र्यहं सर्पिषा । ततस्त्र्यहं पयसा । पलत्रयं दधिपयसोः । सर्पिषः पलम् । वस्त्राणां जलेन क्षालनम् । मृन्मयानां त्यागः कार्यः । कुसुम्भगुडकार्पासलवणसर्पिर्धान्यानि द्वारे कृत्वा वेश्मनि पावकं दद्यात् । ततो ब्राह्मणभोजनम् । त्रिंशद्गावो वृषभश्चैको दक्षिणा । पुनर्लेपनखननहोमजलैः शुद्धिः । अधिकसंसर्गेऽधिकं कल्प्यम् । वृद्धरोगिबालापत्यगर्भिणीनां प्राजापत्यम् । बालानां प्रहरद्वयमभोजनम् । रजकादिष्वेतदर्धं गृहदाहवर्जम् । चाण्डालगृहप्रवेशे चाण्डालैः सह वृक्षच्छायायां गृहे वाऽवस्थाने मासं कृच्छ्राभ्यासः । द्विमासं शूद्रस्य । क्षत्रियवैश्ययोश्चतुस्त्रयः( स्त्रीन् ) । अनिष्टगन्धस्पर्शशब्दरूपवाक्यानामाघ्राणस्पर्शनश्रवणदर्शनकथनेषु रविदर्शनम् । रुद्रनिर्माल्यस्पर्शे सचैलस्नानम् । शैवसौरनिर्माल्यनैवेद्यभक्षणे चान्द्रम् । अभ्यासे द्विगुणम् । अमत्याऽभ्यासे सांतपनम् । अनापदि हरेरन्यनै-

वेद्यभक्षण एवमेव। विष्णोरनिवेदितभोजनेऽर्धकृच्छ्रप्रायश्चित्तम्। हरेर्निर्माल्यनैवेद्यभक्षणे चान्द्रायणफलमिति स्मृत्यर्थसारे। धनहर्ता प्रेतक्रियाया अकरणे तद्वर्णवधे यत्प्रायश्चित्तं तदर्धं कुर्यात्। तदेवेति केचित्।

गोविप्रचाण्डालादिहतोद्बन्धगरदाग्निदात्मघातिशृङ्गिदंष्ट्रिविषवह्निजलविद्युत्सरीसृपहतसंकरजातिपतितशवस्य वहनदहनोदकदानादिक्रियाकरणे तप्तकृच्छ्रः। अमतिपूर्वत्वे गोमूत्रयावकाहारेण कृच्छ्रम्। तच्छवस्पर्शमात्रे केवलेऽश्रुपाते चैकोपवासः। यं कंचित्प्रेतमुद्दिश्य तद्बान्धवैः सहाश्रुपातेऽस्थिसंचयनोत्तरं कृते स्नानम्। ततः पूर्वं तु सचैलं तत्। शूद्रप्रेतानुगमने द्विजस्य स्नानमष्टोत्तरसहस्रगायत्रीजपश्च। द्विजप्रेतानुगमनेऽष्टशतम्। शूद्रस्य तु तत्र स्नानमेव। अनशनजलाग्निपतनानि संकल्प्य ततो भ्रष्टस्य संन्यस्तस्य पुनर्गार्हस्थ्यपरिग्रहेण गृहस्थतामिच्छतश्च कृच्छ्रत्रयपूर्वकं चान्द्रायणत्रयपूर्वकं वा पुनर्जातकर्मादिसंस्कारकरणम्। षण्मासकृच्छ्राभ्यासपूर्वकं वा। अत्र शक्तिसकृदभ्यासकालाद्यपेक्षया व्यवस्था। केचिदत्यसमर्थस्य तप्तकृच्छ्रम्। चान्द्रायणं तु बलात्कारेण परप्रेरणया वा संन्यस्तस्येत्याहुः। ये त्वात्मघाताद्यशास्त्रीयमरणेन मृतास्तत्पुत्रैश्चान्द्रायणतप्तकृच्छ्रद्वयात्मकं प्रायश्चित्तं कृत्वैव तत्क्रियाः कार्याः। क्रोधादिनाऽऽत्मत्यागाध्यवसायमात्र उपवासत्रयम्। अध्यवसायं कतिपयव्यापारं कृत्वा स्वत एव निवृत्तो घृताभ्यक्तो मौनी प्राणायामान्कृत्वा गायत्रीं जपंस्त्रिरात्रमुपवसेत्। अन्येन निवर्तितस्य द्विगुणम्। अध्यवसाय शस्त्रादिक्षतकरणे प्राजापत्यम्। दृढक्षते चान्द्रम्।

चितिभ्रष्टा तु या नारी मोहाद्विचलिता तथा।
प्राजापत्येन शुध्येतेति।

रजस्वले एकभर्तृके अमत्या मत्या वा परस्परस्पृष्टे सद्यः स्नानेन शुध्यतः। असपत्न्योस्तु सवर्णयोर्योनिगोत्रसंबन्धयोरमत्या स्पर्शे तदैव स्नानमात्रम्। मत्या त्वेक उपवासः परेद्युः पञ्चगव्यपानं च। असंबन्धयोः सवर्णयोः स्पर्शे तु मत्याऽऽ शुद्धेरनशनम्। अमत्या तु स्नात्वा तद्दिनोपवासाच्छुद्धिः। तन्मध्ये तु भुक्तौ दिनसंख्याकोपवासाः। विप्रशूद्रयो रजस्वलयोः स्पर्शे विप्रायाः कृच्छ्रम्। शूद्रायाः पादः। शूद्राया

निष्कचतुर्थांशदानमित्यन्ये । अकामतस्तु विप्राया यावच्छुद्धेरनशनम् । शूद्रायाः स्नानमात्रम् । क्षत्रियवैश्ययोरेतत्कालेऽभावाच्छुद्धिर्न विचार्यते । यदेवानुच्छिष्टयोः परस्परस्पर्शेऽन्यस्पर्शे वा तदेवोच्छिष्टत्वे द्विगुणं बोध्यम् । अधरोच्छिष्ट ऊर्ध्वोच्छिष्टार्धम् । चाण्डालाद्यन्तेवसायिपतितशवादीनां मत्या स्पर्शे रजस्वला आ शुद्धेरभुञ्जाना शुद्ध्यन्ते प्रायश्चित्तं कुर्यात् । तच्च प्रथमेऽह्नि स्पर्शे त्रिरात्रम् । द्वितीयेऽह्नि द्विरात्रम् । तृतीय एकाहः । चतुर्थे नक्तम् । तत्र प्रथमदिने यदि सा भुङ्क्ते तदा शुद्ध्यन्ते चान्द्रम् । द्वितीयादिदिनेषु भोजने पादपादन्यूनं कल्प्यम् । अमत्या चाण्डालादिस्पर्शे त्वा शुद्धेरुपवासमात्रम् । अत्र प्रथमादिदिनभुक्तौ प्रागुक्तत्रिरात्रादि योज्यम् । सूतकिशौण्डिकादीनां श्ववृकसृगालवानरखरोष्ट्रविड्वराहकाककुक्कुटादीनामुच्छिष्टशूद्रस्य च मत्या स्पर्शे तदादिकाहन्यभुञ्जानायाः शुद्ध्यन्ते प्रायश्चित्तम् । तच्च प्रथमेऽहनि द्विरात्रमभुक्तिः । द्वितीय एकाहम् । तृतीये नक्तम् । चतुर्थ एकभुक्तम् । अत्र प्रथमादिदिनेषु भुक्तौ प्राजापत्यपादपादन्यूनानि । अमत्या स्पर्शे त्वा शुद्धेरभुक्त्यैव शुध्येत् । भुक्तौ प्राजापत्यपादादिन्यूनादिक्रमेण । चाण्डालरजकरजस्वलासूतकिशवादिस्पृष्टैः सह मत्या स्पर्शेऽमेध्यादिमलोच्छिष्टादिस्पर्शे च तदादिकाहन्यभुञ्जानायाः शुद्ध्यन्ते प्रथमदिने स्पर्शे उपवासः । द्वितीयदिने नक्तम् । तृतीय एकभुक्तम् । परतः पञ्चगव्यम् । प्रथमादिदिने भुक्तौ त्रिरात्रैकोपवासनक्तादि । अमत्या तत्तत्स्पृष्टैः स्पर्शेऽभुञ्जाना शुध्येत् । भुक्तावनशनप्रत्याम्नायाः । उच्छिष्टायाश्चाण्डालादिस्पृष्टस्पर्शे तदाद्यभुक्त्वा त्रिरात्रादि । तेषु भुक्तावुपवासप्रत्याम्नायाः । उच्छिष्टायाश्चाण्डालादिभिः साक्षात्स्पर्शे तु प्रथमादिदिनेषु षट्चतुर्द्विरात्रं गोमूत्रयावकम् । चतुर्थदिने स्पर्शे उपवासः । सपत्नीं रजस्वलां स्पृष्ट्वा रजोदर्शने स्नात्वा भुञ्जीत । असपत्नीं सवर्णां स्पृष्ट्वा रजोदर्शन आ शुद्धेरभुक्तिश्चान्द्रं च । एवं मृताशौचिभिः स्पर्शे । स्नानात्प्राग्रजोदर्शन आ शुद्धेरभोजनमेव । भुक्तौ तु चान्द्रम् । एवं बन्धुमरणश्रवणेऽमेध्यमलोच्छिष्टादिस्पर्शे च । स्नानात्प्राग्रजोदर्शनेऽपि । रजोदर्शनोत्तरं बन्धुमरणश्रवणे त्वा शुद्धेरभोजनमेव । उच्छिष्टा रजः पश्यति चेच्छुद्ध्यन्ते त्र्यहम् । अधरोच्छिष्टे त्वेकाहमुपवासः । अत्र सर्वत्राशक्तायाः सद्यःस्नानेन भोजनम् । शुद्ध्यन्तेऽनशनप्रत्याम्नायाः । भोजन-

काले रजस्वलायाः श्वान्त्यजादिस्पर्शे षड्रात्रं गोमूत्रयावकाहारः । शुद्धिं यावदुपवासश्च । रजस्वलाया भुक्तोच्छिष्टद्विजस्पर्शे त्रिरात्रोपवासः । अवरोच्छिष्टतत्स्पर्शे एकाहः । रजस्वलाया भोजनकाले रजस्वलान्तरदर्शने आ शुद्धेरभोजनम् । भुञ्जानायाश्चाण्डालादिदर्शने उपवासत्रयमपि । एकोपवासो वा । कामतस्तु प्राजापत्यम् । सूतकमृतकयोर्मध्ये रजो दृष्टाव( ष्ट्वा ) स्नात्वा भोजनम् । शुद्ध्यन्त उपवासः । आर्तवमध्ये मृताशौचप्राप्तावा शुद्धेरभोजनम् । अशक्तायाः स्नात्वा भोजनम् । रजस्वलाया व्रतस्थाया रजस्वलाभिभाषण उपवासः । सर्वत्र रजस्वलाया उपवासासामर्थ्येऽकालकृष्टफलाद्याहारान्ते पञ्चगव्यपानम् । एवं गर्भिण्या बालापत्यायाश्च । रजस्वलाया उक्तस्पर्शादिनिमित्तेन ग्रहणसंक्रान्त्यादिनिमित्तेन वा नैमित्तिकस्नानप्राप्तौ पात्रान्तरिततोयेन तत्कार्यं न तु मज्जनम् । तत्र गात्रमार्जनं वस्त्रपीडनं च न कार्यम् । अन्यवस्त्रधारणं च नेत्येके । प्रारब्धे दीर्घव्रते रजोदृष्टौ व्रतलोपो नास्ति । हविष्यभोजनादिशरीरनियमं स्वयं कुर्यात् । पूजामन्येन कारयेत् । चतुर्थदिने त्वस्नात्वा भुक्तौ कायम् । मत्या चान्द्रम् । तस्या ज्वरादौ तु चतुर्थेऽहन्यन्या स्त्री नरो वा दशवारं द्वादशवारं वा स्पृष्ट्वा सचैलं स्नायादाचामेच्च । अन्ते वस्त्रत्यागः । ततः शुद्धा सा यथाशक्ति दक्षिणां दत्त्वा पुण्याहं वाचयेत् । अयं चाऽऽतुरमात्रे स्नानप्रकारः । आतुरे पुंसि तु मन्त्रैरपि मार्जयेत् । ते च समुद्रज्येष्ठा इति चतस्रः । आपो हि ष्ठेति तिस्रः । शुचीवो हव्येति तिस्रः । एतोन्विन्द्रमिति तिस्र ऋच इति ।

रजस्वलासूतिकयोर्मरणे तयोर्मलं प्रक्षाल्य स्नापयित्वा काष्ठवदमन्त्रकं दग्ध्वा चान्द्रायणत्रयं प्रायश्चित्तं कृत्वाऽस्थीनि मन्त्रवद्दहेत् सूतिकाया आद्यत्र्यहे त्र्यब्दमशीतिकृच्छ्रं वा । द्वितीयादित्र्यहेषु न्यूनम् ।

रजस्वला जलावगाहाभ्यङ्गप्रवासदन्तधावननखनिकृन्तनताम्बूलमधुमांसगन्धपुष्पदिवास्वापग्रहनक्षत्रनिरीक्षणानि वर्जयेत् । मृन्मय आयसे वा भुञ्जीतेत्यादिनियमस्था च स्यात् । इति रजस्वलाविधिः ।

अनुक्तेषु दण्डादिना स्तुतिनिन्दादिभिश्च प्रायश्चित्तादि कल्प्यम् । इति प्रकीर्णकप्रायश्चित्तानि ॥

---

अथ जातिभ्रंशकरादिप्रायश्चित्तानि—तत्र जातिभ्रंशकरेषु कामतः कृतेषु सप्ताहसाध्यं महासांतपनम् । अकामे प्राजापत्यम् । सकृदमत्या कृतयोः संकरीकरणापात्रीकरणयोः शिशुचान्द्रायणम् । अज्ञानतः संकरीकरणानुष्ठाने मासं यावकाशनम् । ज्ञानतः कृच्छ्रातिकृच्छ्रः । अज्ञानतोऽभ्यासे चान्द्रम् । ज्ञानतोऽभ्यासे चान्द्रद्वयम् । अज्ञानादपात्रीकरणे तप्तकृच्छ्रं शीतकृच्छ्रं वा । ज्ञानतो महासांतपनम् । चान्द्रं पूर्ववत् । अज्ञानतो मलिनीकरणानुष्ठाने त्र्यहं तप्तयावकपानम् । ज्ञाने तप्तकृच्छ्रं महासांतपनं वा । अज्ञानतोऽभ्यासे कृच्छ्रातिकृच्छ्रः । ज्ञानतोऽभ्यासे द्विगुणम् । एतानि जातिभ्रंशकरादिसामान्यप्रायश्चित्तानि यत्र विशेषो नोक्तस्तत्र केवलानि योज्यानि । यत्र तु प्रातिस्विकेषु कानिचिद्वक्ष्यन्ते । तेषु जातिगुणाद्यपेक्षयैतान्यपि योज्यानि । इति जातिभ्रंशकरसंकरीकरणापात्रीकरणमलिनीकरणप्रायश्चित्तानि ।

अथोपपातकप्रायश्चित्तानि । तत्र सामान्यत उपपातकेषु—

उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वाऽपि मासेन पराकेणाथवा पुनः ॥

इति याज्ञवल्क्योक्तं चतुष्टयम् । एवमित्यस्य मासं पञ्चगव्यपानेन मासं प्राजापत्याभ्यासेन वा मासमतिकृच्छ्रेण वा त्रिरात्रोपवासपूर्वकदशगोसहितवृषभदानेनेत्यर्थः । एतेषां पापाल्पत्वगुरुत्वे देशकालवयःशक्त्यादिकं चापेक्ष्य व्यवस्था बोध्या । कामकृतात्यन्ताभ्यासे तु गोवधे वक्ष्यमाणत्रैमासिकम् । तथा चोपपातकनिवृत्तौ गोघ्नवत्प्रायश्चित्तानि विकल्पितानीति क्वचित्प्रतिपदोक्तान्यन्यान्युच्यन्ते । तेषामप्येतैः सह विकल्पो विषम(य) [ वि ] भागो वा बोध्यः ।

तत्र गोवधे—ब्राह्मणस्वामिकचतुर्हायन्यादीनां गवां शस्त्रलोष्टमुष्टिलकुटपाषाणविषाणादिना साक्षाज्ज्ञानपूर्वकं कामतो वधे मासं गोमूत्रसहितयावकयवागूपानम् । शृङ्गलाङ्गूलखुरासृक्स्रावयुतार्द्रहतगोचर्मावृतस्य गोष्ठे वासः । ततो मासद्वयं चतुर्थकालभोजनमक्षारलवणं मितम् । मासत्रयमपि गोमूत्रेण स्नानं गोमतीजपः । दिवा गाः पालयेदनुव्रजेदनुतिष्ठेदनुस्वपेच्च । तासु गच्छन्तीषूर्ध्वं तिष्ठन्रजः पिबेत् । रात्रौ ताः सेवित्वा नत्वा वीरासनी भवेत् । भित्त्याद्यनाश्रित्योपवेशनं वीरासनम् ।

उत्तिष्ठंस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ।
एतद्वीरासनं नामेत्यन्ये ॥

चोरव्याघ्रपङ्कपातादिभयादिभ्यस्ताः सर्वप्राणैर्विमोचयेत् । तासु शीतोष्णवातवर्षपीडितासु त्रातुमक्षमो नाऽऽत्मनो रक्षणं कुर्यात् । स्वपरगृहक्षेत्रादावन्नादिकं भक्षयन्तीर्न कथयेन्न निवारयेत्पिबन्तं वत्सं च । एवं मासत्रयेण तत्पापविमोक्षः । अत्र स्नानाङ्गभूतमन्त्रपाठः काले संध्यावन्दनं च कार्यम् । एवं ब्रह्मघ्नादीनामपि व्रताङ्गशौचार्थं तद्भवत्येव । स्त्रीणां तु गवानुव्रजनगोष्ठशयनगवाजिनधारणजपादिकं नास्ति । स्त्रीबालवृद्धादीनामर्धम् । शूद्रस्य स्त्रीसमानधर्मत्वादर्धमेव ।

शूद्राश्च स्त्रीसधर्माणः सर्वे सङ्करजाः स्मृताः ॥

इति मनूक्तेः । प्रतिलोमजानामप्यर्धम् । वैश्यतुल्यशूद्रस्य तु पूर्णमेवेति स्मृत्यर्थसारे । अज्ञानकृतेऽप्यर्धम् । अत्र पूर्णव्रत एको वृषभो दश गावस्तन्मूल्यं वा दक्षिणा । अर्धव्रत एतदर्धमेका गौः । तावत्यविद्यमाने सर्वस्वं देयम् । अत्र मासमीषद्गोमूत्रसहितयावकपाने प्राजापत्यद्वयम् । स्नानादीतिकर्तव्यतासहितमासोपवासे शतं प्राजापत्यानि । एकादशे स्नातस्त्रिशभक्तैः पञ्चचत्वारिंशत्संकलनया सप्तदश प्राजापत्यानि वा सप्तदश धेनवो वा तन्मूल्यं वेति चत्वारः पक्षाः । मूल्यं च तावद्द्रव्यलभ्यं काञ्चनं गौर्वासोऽश्वो भूमिस्तिला घृतमन्नं च । यत्र द्रव्यं तन्मात्रोल्लिख्य संकल्पः कार्यः । चतुर्ष्वपि पक्षेषु दक्षिणा प्रागुक्तैव । ज्ञानकृते क्षत्रियस्वामिके तादृशगोवधे षण्मासं तच्चर्मणाऽऽवृतो गोग्रासदो गोव्रती यवाशी गोभिरेव संचरन्विमुच्यते । अत्र षाण्मासिकव्रते द्वादश प्राजापत्यानि द्वादश धेनवस्तन्मूल्यं वेति चत्वारः पक्षाः । दक्षिणा यथाशक्तीति शूलपाणिः । अन्ये तु वृषभहन्ता वृषभं स्त्रीगोहन्ता तां दद्यादित्याहुः । वृषभरहिता दश गाव इति गौडाः । अज्ञानकृते त्वर्धम् । बालादीनां च प्राग्वत् । अज्ञानकृते वैश्यसंबन्धिगोवधे मासं पञ्चगव्यपानम् । गोष्ठे वासो गवामनुगमनं गोमतीमन्त्रजपान्ते गोदानम् । अत्र मासव्रते चत्वारि प्राजापत्यानि चतस्रो धेनवस्तन्मूल्यं वा । पञ्च प्राजापत्यानीति शूलपाणिः । दक्षिणा त्वेका धेनुः । ज्ञानतो द्विगुणमेतत् । अत्र चर्मादिधारणं नास्ति । ज्ञानकृते शूद्रसंबन्धिगोवधे प्राजापत्यचतुष्टयं

चतस्रो धेनवस्तन्मूल्यं वा । यस्य तैलगुडादिव्यापारान्तरं कारणान्तरनिरपेक्षः कालान्तरे गवां प्राणमोक्षः सोऽपि साक्षाद्गोघ्नः । ज्ञानकृतत्वं च गां ज्ञात्वैतां हन्मीति कामनया हननम् । एतद्रहितमज्ञानकृतत्वम् । तद्राहित्यं च कामनाभावेन तत्प्रापकप्रमात्मकज्ञानाभावेन वा । एवं सर्वत्र बोध्यम् । प्रायश्चित्तानन्तरं पार्वणविधिना श्राद्धं कार्यम् । तच्च जीवत्पितृकेणापि । किंतु पितुः पित्रादिभ्य एव । गोचर्मधारणादिकं प्रायश्चित्तं च गोपतये गोमूल्यं प्रतिरूपगवान्तरं दत्त्वा कार्यम् । पत्रदाने त्विदं लेख्यम् । पूर्वदिने सशिखं वपनं कृत्वा परदिने घृतं प्राश्योपोष्य तत्परादिने स्नानादिकं विधाय व्रतं तत्प्रतिनिधिं वा संकल्प्यानुष्ठाय विप्राय यथोक्तां दक्षिणां दत्त्वाऽच्छिद्रावधारणं कुर्यात् । ततः पार्वणविधिना श्राद्धं भोज्यदानं च कार्यम् । यत्स्वामिकगोवधे यत्प्रायश्चित्तमुक्तं तत्स्वामिकगर्भिणीकपिलाबहुक्षीरादिकगुणकहोमधेन्वादिवधे तद्द्विगुणम् । गर्भिण्यां च सचेतनगर्भयुतायामेवेदम् । उत्पन्नमात्रदार्ढ्ययुताचेतनाङ्गप्रत्यङ्गपूर्णगर्भयुतायास्तु क्रमेण सपादं सपादद्वयं सपादत्रयं पूर्णद्विगुणं च गोघ्नव्रतम् । लगुडादिघातेऽपि गोर्जीवने गर्भमात्रपाते पूर्वोक्तोत्पन्नादिक्रमेणैकपादमर्धपादं त्रिपादं पूर्णव्रतं च । अतिवृद्धातिकृशातिबालातिरोगिणीनां वधे ज्ञानाज्ञानकृते पूर्वोक्तार्धम् । अतिवृद्धत्वं तृणादिच्छेदनासामर्थ्यम् । अतिकृशत्वं दोहवहनायोग्यत्वम् । अतिबालत्वं द्विवर्षीयत्वम् । एकवर्षत्रिवर्षयोर्वधे तु पूर्वोक्तक्रमेण पादं पादत्रयं च । एकप्रयत्ननिष्पन्नानेकगोवधे तु प्रायश्चित्ते द्वैगुण्यम् । एवं गृहदाहादिस्थलेऽपि । क्रमकृते त्वनेकगोवधे प्रयत्नभेदेन पापभेदात्प्रतिगोवधं यथोक्तप्रायश्चित्तावृत्तिः । बहुभिरेकस्या हनने यत्र यावद्विहितं तस्यैव पादं पादं प्रतिपुरुषं कार्यम् । केचित्त्वज्ञानतः पादं पादम् । ज्ञानतस्त्वर्धमर्धमाहुः । बहुभिरेकव्यापारेण द्वयोर्बहूनां च हनने प्रतिपुरुषं पादद्वयं पादत्रयं च कार्यम् । मिताक्षरा तु बहुभिरेकद्विबहुवधे कामकृते पूर्णमेव पूर्वोक्तं पादद्विपादादिकमकामकृतवधपरमित्याह । प्रयत्नभेदे तु प्रतिवधं प्रतिपुरुषप्रायश्चित्तावृत्तिः । द्वाभ्यामेकस्या द्वयोर्वैकप्रयत्नेन वधे प्रत्येकं पूर्णमेव । बहूनां वधे तूक्तरीत्या प्रत्येकं द्विगुणम् । अत्यन्तव्याधिपीडितमरणावस्थापन्नोन्मत्तान्धवर्षन्यूनगोवधे पादमेव ।

अधमशूद्रकैवर्तादिकस्वामिकैकहायनीद्विहायनीत्रिहायणीवधे क्रमेण प्राजापत्यार्धं सार्धप्राजापत्यं प्राजापत्यद्वयं चेति । अज्ञानतोऽर्धमेतत् । गर्भिण्यादौ द्विगुणम् । अतिरोगेऽतिकृशत्वादौ तदर्धम् । अत्र या दक्षिणोक्ता सा प्रायश्चित्तद्वैगुण्ये द्विगुणा । अर्धेऽर्धा । पादे पादरूपेत्येवं व्यवस्था बोध्या । अग्निहोत्रिणो वेदपारगस्य होमधेनोः कपिलाया गर्भिण्याः पुण्यदेशे पुण्यकाले च बुद्धिपूर्वकवधे तु वैश्यवधे वक्ष्यमाणं त्रैवार्षिकव्रतम् । एकशतं गावो वृषश्चैको दक्षिणा । एवमन्यान्यपि सहस्रगोदक्षिणायुतानि गुरुप्रायश्चित्तान्येवं वधविद्वद्वि(विद्वद्वधावि)षये योज्यानि ।

अथ पञ्चविधत्वनिर्णयः—चेतनान्तरव्यापारव्यवधानमन्तरेण प्राणवियोगफलकव्यापाररूपवधनिष्पादकः कर्ता १ । यस्त्वप्रवृत्तं पुरुषं वेतनादिना प्रवर्तयति प्रवृत्तं वा प्रोत्साहयति स प्रयोजकः २ । वध्यस्य पलायनादिनिरोधकोऽनुग्राहकः ३ । एतां हन्मीति वक्तुरनुमतिदाता निषेधक्षमोऽपि मौनालम्बी चानुमन्ता ४ । उपदेश्यस्य हन्तुर्हन्तुं क्रोधमत्याद्युत्पादको निमित्तम् ५ । प्रयोजकादीनां क्रमेण पादपादहानिरिति शूलपाणिः । अष्टमभागहानिरिति भवदेवः । पैठीनसिः—

हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादकः ।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥
आश्रयः शस्त्रदाता च भुक्तिदाता विकर्मणाम् ।
उपेक्षकः शक्तिमांश्च दोषवक्ताऽनुमोदकः ॥
अकार्यकारिणस्त्वेषां प्रायश्चित्तं प्रकल्पयेत् ॥ इति ।

एवं सर्वपापेषु यथासंभवं योज्यम् ।

अथ रोधादौ प्रायश्चित्तम्—क्षीणाया गोरक्षीणत्वभ्रमाद् रोधनेन वधे यत्स्वामिकगोवधेऽज्ञानतो यत्प्रायश्चित्तमुक्तं तस्य पादः । तादृश्यास्तथाभ्रमाद्बन्धनेन वधे तस्य पादद्वयम् । तथाभ्रमाद्धलशकटादावतिकालयोजनेन मरणे तत्पादत्रयम् । अतिदोहेऽप्येवम् । अङ्गुष्ठस्थूलहस्तत्रयप्रमाणपलाशदण्डनिपातनेन तादृश्यास्तथाभ्रमाद्वधे संपूर्णम् । उक्तदण्डाधिकदण्डादिना वधे तद्द्विगुणमिति केचित् । क्षीणत्वज्ञाने तु ज्ञानकृतवधविहितं तस्य पादाधिकम् । रोधश्चात्र रात्रौ रक्षार्थं क्रियमाणरोधातिरिक्ताहारप्रचारनिर्गमरोधः । बन्धनं च दृढकुशकाशादिकरज्जुव्यतिरि-

क्तेनायथाबन्धनमकालबन्धनं च । योजनं च हलशकटादावतिवाहादिना । भवदेवस्तु वैश्यादिस्वामिकगोः क्षैण्यज्ञाने रोधादिना वधे क्रमेण चान्द्रायणपादपादद्वयपादत्रयपूर्णचान्द्रायणानि । अज्ञाने तु प्राजापत्यस्यैव पादादिकमित्याह । शूलपाणिस्तु सर्वस्वामिकगोः क्षीणत्वं ज्ञात्वा प्रवृत्तेन पुंसा रोधादिना वधे चान्द्रायणपादादिकम् । क्षीणत्वाज्ञाने तु प्राजापत्यस्यैव पादादिकमित्याह । चान्द्रायणे वृषभसहिता गौर्दक्षिणा । ताडनार्थमुद्यतं दृष्ट्वा भीत्या कूपादौ निपत्य मृते प्राजापत्यम् ।

अथास्थिभङ्गादिप्रायश्चित्तम् । गवामस्थिभेदे लाङ्गूलच्छेदे कर्णशृङ्गोत्पाटने कटिभङ्गे चर्मनिर्मोचने च षण्मासाभ्यन्तरे मरणे पूर्णप्रायश्चित्तम् । षण्मासोत्तरं मरणे तदर्धम् । जीवने च मासार्धम् । गोमूत्रसहितयावकपानं सर्ववर्णानाम् । एतच्चैकप्राजापत्यसमम् । हलशकटयोर्विंप्रेण वृषभवाहने प्राजापत्यद्वयम् । योषितो द्विगुणं सर्वेषाम् । समुत्सृष्टगोवृषभयोर्येन केनापि दोहने वाहने च चान्द्रायणद्वयम् । कपिलादोहने विप्रस्याप्येतदेव । उत्सृष्टवृषभगोवधे द्विजस्य कपिलावधोक्तं प्रायश्चित्तम् । शूद्रस्य तु विशेषः—वृषभादेरुत्सृष्टत्वे स्वत्वाभावेऽपि भूतपूर्वस्वत्वमाश्रित्य यत्स्वामिकवृषभादिवधकर्तुः प्रायश्चित्तमुक्तं तत्स्वामिकं तद्द्विगुणं बोध्यम् । अण्डनाशे लिङ्गच्छेदने च मृततुल्यप्रायश्चित्तम् । तदनन्तरं मरणे च द्विगुणम् ।

अथ पालननिमित्तवधे—तत्राविभक्तानां भ्रातॄणां मध्ये सर्वानुमत्यैकेन प्रायश्चित्ताचरणे सर्वेषां पापक्षयान्न पृथक्प्रायश्चित्ताचरणम् । तत्र शूद्रस्वामिनो रक्षणाभावनिमित्तकवधे यत्किंचिद्दक्षिणादिकं केवलं प्राजापत्यम् । द्विजस्वामिनस्तु सशिखं मुण्डितस्य त्रिसंध्यावगाहनशीलस्य पूर्वोक्तचर्मावृतस्य गोव्रजवासिनो दिवारात्रं तन्मध्ये स्थितस्य प्राजापत्यम् । अन्येन ब्राह्मणभोजनमनडुत्सहिता गौश्च दक्षिणा। इतिकर्तव्यतासहितप्राजापत्याशक्तौ धेनुद्वयं दक्षिणा प्रागुक्तैव । शूलपाण्यादयस्तु सर्वेषां केवलं प्राजापत्यम् । तदशक्तावेकधेनुर्दक्षिणा तु प्रागुक्तेत्याहुः । उत्सृष्टवृषभादिषु स्वत्वाभावादपालनान्मृतेष्वप्युत्स्रष्टुर्न दोषः । अपालनमृत्युश्च शीतानिलोद्बन्धनशून्यागाराद्युपेक्षाजला-

दिमज्जनकूपादिपतनसर्पविद्युद्धननश्वभ्रपातव्याघ्रादिभक्षणकृतः। एतच्च पालनासमर्पणे। तत्समर्पणे तु पालकस्यैव दोषः। परंतु यावत्कालं पालकाधीनता तावदेव। अशक्तपालकसमर्पणे तु स्वामिन एव दोषः। एवमिक्षुतैलयन्त्रार्थं नियुज्य संनिधावीक्षणे दैवाद्गृहदाहगृहभङ्गाभ्यां गोमरणे घण्टाभरणादिदोषेण गवां विपत्तौ चार्धप्राजापत्यम्। यदि गोः शक्तिमनपेक्ष्य दत्तभारादिदोषेण मरणं तदा प्राजापत्यम्। शक्तपालकस्य संनिधिसत्त्वे कान्तारदुर्गगृहदाहावटेषु लतापाशाद्यावृतस्य गोर्यदि मरणं तदा प्राजापत्यपाद एवेत्याहुः। तथा त्रिहायनपर्यन्तवत्सस्यारक्षणेऽपि पाद एव। गोमांसभक्षकाय गोविक्रये चान्द्रायणम्। यदि तस्मै पालकेन धेनवो विक्रियन्ते तदा तत्तत्स्वामिकगोवधप्रायश्चित्तं प्राजापत्यादिकम्। पालकबहुत्वे तु पालकानामविभक्तानां सर्वेषामेकम्। विभक्तानां तु पादं पादम्। बहूनां गवामपालननिमित्तवधे पालकस्य द्विगुणम्। तत्रापि बहुकर्तृत्वे प्रत्येकं द्विगुणम्। पालकस्य द्रव्यभावे स्वामिना द्रव्यं दत्त्वा कारणीयम्। म्लेच्छपालकत्वे तु स्वामिना कर्तव्यम्। अथौषधाद्युपचारे—

दाहच्छेदशिराभेदप्रयोगैरुपकुर्वताम्।
द्विजानां गोहितार्थं च प्रायश्चित्तं मृतौ नहि॥

इदं चाज्ञानिन आदरेण यथावदुपचार एव। शास्त्रस्यानादरेणायथावदुपचारे च प्राजापत्यव्रतमन्ते धेनुर्दक्षिणा। भिषगपि विरुद्धौषधदानेनाकामतोऽप्येकगोवधे द्विगुणं गोवधप्रायश्चित्तं चरेदिति मिताक्षरादौ। अतिदाहेऽप्येतदेवेति केचित्। एवं यन्त्रेण गोचिकित्सार्थे गूढगर्भमोचन औषधस्नेहाहारदानैश्च गवादिमृतौ न प्रायश्चित्तम्। इदमपि स्वेच्छया गृह्यमाण एव। हठादधिकं दीयमानमाहारस्नेहादिकं मृतिहेतुश्चेत्पादकृच्छ्रः। एवं नगरग्रामदाहेष्वबद्धानां मृतौ पालकस्य स्वामिनश्च न दोषः। बन्धने तु पादकृच्छ्रः। एवं व्याधियुक्तानां दण्डाभिघातादिना मूर्च्छयाऽभिपतनेऽनन्तरं गमनग्रासतोयपानैस्तदानींतनताडनस्य मरणहेतुत्वाभावनिश्चये पूर्वव्याधिनष्टानां न प्रायश्चित्तम्। यदि पूर्वव्याधियुताऽपि प्रहारजनितपीडयैव ग्रासादिकं न कृत्वैव म्रियते

तदाऽर्धं पादं वा प्रायश्चित्तं भवत्येव । शालादौ गवां मशकादिनिवृत्त्यर्थं धूमायाग्निं प्रज्वाल्य पालकादेस्तत्र स्थितौ दैवात्तदग्निना बन्धनरहितस्य गवादेर्मरणे दोषाभावः । तत्रानवस्थितौ बन्धने वा पादकृच्छ्रः । त्रिशूलादिस्थिरतरचिह्नकरणेन गोण्यादिवाहनादिभिश्चर्मनिर्मोचने दोषाभावः । मत्ता गौर्यदि निवारयन्तं पालकमतिक्रम्य गर्तकूपादौ पतनादिना म्रियते तदाऽपि न दोषः । शङ्कारहिते वनादौ सति संनिधौ पालकेऽकस्मादागतव्याघ्रादिना मरणेऽपि न दोषः । पालकस्य तत्रासत्त्वे तु दोष एव । एवं राजसैन्यादिभिः शरादिभिर्ग्रामघातराष्ट्रघातवेश्मभङ्गातिवृष्टिव्याध्युपद्रववृक्षादिपतनादिभिरुपद्रुतानामबद्धानां पालकसत्त्वे मरणे दोषो न । पालकासत्त्वे बन्धने च दोषादुक्तपादः प्रायश्चित्तम् । गोहरणे तु—

अश्वगोभूमिकन्याश्च हृत्वा चान्द्रायणं चरेत् ।
क्षुद्रान्पशून्समाहृत्य प्राजापत्यं समाचरेत् ॥

इति जाबाल्युक्तं प्रायश्चित्तम् । गोवधोक्तं सर्वं वृषवधेऽपि । स्त्रीत्वस्याविवक्षितत्वात् । दानं तु स्त्रीगवीणामेव । विधेयगतत्वेन स्त्रीत्वस्य विवक्षितत्वादिति मयूखे ।

अत्र वपने विशेषः—पुंसां गोवधोक्तप्रायश्चित्तपादे कण्ठादधःस्थिताङ्गलोम्नां वपनम् । अर्धप्रायश्चित्ते श्मश्रूणामङ्गरोम्णां च शिरःकेशवर्जम् । त्रिपादेऽङ्गरोमश्मश्रुशिरःकेशानां शिखावर्जम् । पूर्णप्रायश्चित्ते सशिखं वपनम् । स्त्रीणां तु सधवानां वपनं न क्वापि प्रायश्चित्ते । किंतु सर्वान्केशान्समुद्धृत्य द्व्यङ्गुलच्छेदनमात्रं कार्यमिति स्मृत्यर्थसारे । इति गोवधप्रायश्चित्तनिर्णयः ।

अथ व्रात्यप्रायश्चित्तनिर्णयः- व्रात्यश्च पञ्चदशैकविंशतित्रयोविंशतिवर्षरूपे षोडशद्वाविंशतिचतुर्विंशतिवर्षरूपे वा ब्राह्मणक्षत्रियवैश्योपनयनकाल उपनयनाभावात् । तत्र यस्योपनयनेऽज्ञाद्यभावेन तत्कालातिक्रमस्तस्य साधारणोक्तचान्द्रायणादिचतुष्टयान्यतमं शक्त्यनुसारेण कृत्वोपनयनं कार्यम् । अनापदि यस्य तदतिक्रमस्तस्य मानवं त्रैमासिकम् । तदसमर्थस्य सशिखवपनपूर्वकमेकविंशतिरात्रं प्रसृतिमात्रं यावकपानं पञ्चविप्रभोजनं च । यस्य षोडशादिवर्षादूर्ध्वमप्यनापादि बुद्ध्या तदतिक्रमस्तेन

मासद्वयं यावकपानं मासं पयो मासार्धमामिक्षाऽष्टरात्रं घृतं षड्रात्रमयाचितं त्रिरात्रमब्भक्षताऽहोरात्रमुपवास इत्युद्दालकव्रतं कार्यम्। यस्य पितृपितामहावनुपनीतौ तस्य संवत्सरं भैक्षाशनगुरुशुश्रूषादिरूपं ब्रह्मचर्यव्रतम्। तत उपनयनम्। ततो यावतां पुरुषाणामनुपनयनं तावत्संख्याकवर्षपर्यन्तं प्रायश्चित्तार्थं यदन्ति यच्च दूरक इत्यादिसप्तपावमानीभिर्येन देवाः पवित्रेणेति यज्ञपवित्राख्येन कया नश्चित्र आ भुव इति सामपवित्राख्येन हंसः शुचिषदित्यनेनेत्येतैर्मन्त्रैः स्नानं ततोऽध्याप्यता। यस्य तु प्रपितामहादीनामुपनयनं नानुस्मर्यते तस्य द्वादशवार्षिकं पूर्वोक्तं ब्रह्मचर्यम्। तत उपनयनम्। ततः पुरुषसंख्याकाब्दपर्यंतमुक्तमन्त्रैः स्नानम्। तदनन्तरमप्यस्य गार्हस्थ्यमात्रोपदेशो नाध्यापनं नापि व्यवहारः। तज्जन्ये तु स्वकालातिक्रमप्रायश्चित्तमात्रं कृत्वा यथाकालमष्टमादिवर्षे संस्कारः। अस्याध्ययनादिकं भवति। इति व्रात्यप्रायश्चित्तम्।

अथ स्तेयप्रायश्चित्तम्—स्तेयं चौर्यम्। तच्च विप्रस्वामिकस्वर्णतत्सम्व्यतिरिक्तमेवोपपातकम्। स्वर्णादिचौर्यस्य महापापत्वात्। तत्र विप्रस्य विप्रस्वामिकं दशकुम्भपरिमितं धान्यं वा तत्परिमितं तण्डुलाद्यन्नं वा तत्तुल्यमूल्यं वा ताम्ररजतादिकं वाऽमत्याऽपहर्तुस्त्रैमासिकं गोवधव्रतम्। तच्च गोचर्मगोसेवादितद्विशेषरहितं कार्यम्। मत्याऽभ्यासे वा कृच्छ्राब्दम्। क्षत्रियादेर्हर्तुः पादपादह्रासः। क्षत्रियस्वस्य तावतः कामतोऽप रे षाण्मासिकम्। वैश्यस्वे त्रैमासिकम्। शूद्रस्वे चान्द्रम्। कुम्भपरिमाणं तु—

> अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ च पुष्कलम्।
> पुष्कलानि च चत्वारि आढकः परिकीर्तितः॥
> आढकानि च चत्वारि द्रोण इत्यभिधीयते।
> दशद्रोणा भवेत्खारी कुम्भोऽपि द्रोणविंशतिः॥ इति।

स्मृत्यर्थसारे तु कुम्भः पञ्चसहस्रपलपरिमाण इति। सार्धशतद्वयपणमूल्यक्षत्रियस्वामिकगृहक्षेत्रभूमिवापीकूपतडागादिपानीयरसानां तत्स्वामिकस्य निक्षेपस्य तावन्मूल्यरजतवस्त्ररत्नादेश्च नारीनराश्वानां चापहारे चान्द्रम्। वैश्यशूद्रस्वे तादृशे पूर्वोक्तक्रमेण चान्द्रार्धतत्पादौ। विप्र-

स्वे तादृशे स्वर्णस्तेयसमम् । तेन षडब्दम् । स्वर्णस्तेयसमवदिति स्मृत्यर्थसारे । अत्र षडब्दं न्यूनं कल्प्यम् । त्रपुसीसलोहादिद्रव्याणामल्पप्रयोजनानां सार्धशतद्वयपणपञ्चदशांशमितानां हर्तुः सांतपनम् । एकवारभोजनपर्याप्तानां भक्ष्यभोज्यपानादीनामपहारे तत्सममूल्यकानां यानशय्यासनोपानत्पुष्पफलमूलकर्णमृद्भाण्डमधुमांसौषधसुगन्धद्रव्याणामपहारे पञ्चगव्येनाहोरात्रम्। द्विवारभोजनपर्याप्ततदपहारे त्रिरात्रं तत् । त्रिरात्रभोजनपर्याप्ताहारमूल्येऽप्येतदेव । तृणकाष्ठद्रुमशुष्कान्नगुडतैलचर्मणां त्रिभोजनमूल्यानां हरणेऽप्येतदिति स्मृत्यर्थसारे । द्वादशाहारपर्याप्तब्राह्मणस्वामिकमणिमुक्ताप्रवालताम्ररजतशङ्खशुक्तिलोहकांस्योपलापहारे द्वादशाहं कणान्नता । त्रिभोजनपर्याप्ताहारमूल्यकार्पासकीटजजीर्णाद्विशफैकशफपशुरज्जुपक्षिणामपहार एक उपवासः । त्र्यहं पयःपानं वा । गजाश्वभूमिकन्याहरणे षडुपवासाः । अभ्यासे चान्द्रायणम् । षण्मासं गोमूत्रयावकाहारो वा । एवं पुस्तकादिचौर्येष्वपि ह्रियमाणाल्पत्वबहुत्वाभ्यां प्रायश्चित्तादि कल्प्यम्। देवद्रव्यापहारेऽब्दम् । यस्य वर्णस्य वृत्तिं यो हरेत्स तद्वर्णवधप्रायश्चित्तं पादोनं कुर्यात् । अत्र सर्वत्र सकृदभ्यासद्रव्याल्पत्वमहत्त्वदेशकालस्वाम्यपहर्तृगुणवैगुण्याद्यपेक्ष्य प्रायश्चित्तगुरुलघुता ज्ञेया । इदं च प्रायश्चित्तमपहृतद्रव्यस्वामिने तद्द्रव्यं दत्त्वैव कार्यं सति स्वामिनि । वैदिकाग्निभ्यः काष्ठं गवे तृणं हर्तुः पान्थद्विजस्येक्षुद्वयं मूलकद्वयं चणकव्रीहिगोधूमयवमुद्गमाषाणां मुष्टिं क्षेत्राद्धरतः स्वाम्यनिषिद्धस्य स्तेयदोषो नेति मयूखे । इति स्तेयप्रायश्चित्तानि ॥

अथ ऋणानपाकरणप्रायश्चित्तम्—यज्ञाध्ययनप्रजारूपाणां देवर्षिपितृऋणानामनपाकरणमात्मपितृपितामहादिभिरुत्तमर्णाद्गृहीतानां धनानामदानं च तत् । तत्र यज्ञब्रह्मचर्याद्यकरणरूपदेवऋष्यादिऋण उपपातकसामान्योक्तचान्द्रादिष्वेकं शक्त्या कार्यम् । सर्वथा तदसंभवे वर्षान्ते वैश्वानरेष्टिः कार्या । सा च सत्याधानादिना तदधिकारे तदकरणे प्रतिवर्षं कार्या । उत्तमर्णऋणादाने तु कालविलम्बादिप्रयुक्तमेतच्चान्द्राद्यन्यतमं प्रायश्चित्तमुत्तमर्णाय तद्धनं दत्त्वा कार्यं सति धने । इत्यृणानपाकरणप्रायश्चित्तम् ॥

अथानाहिताग्नितापायश्चित्तम्—सा च सत्यधिकारेऽग्न्याधानाभावः। तत्र वर्षापूर्तौ प्रतिमासं त्रिरात्रम्। ततः प्रत्यब्दं चान्द्रादिष्वेकं शक्त्या कार्यम्। अनापदि तु त्रैमासिकम्। पितर्यनग्नावाधातुरयष्टरि यष्टुश्च सुतस्य व्रात्यपशुः कार्यः। औपासनाग्न्यसंधान आवर्षं प्रतिमासमुपो- वासः। अब्दे चान्द्रादिष्वेकम्। यद्वा प्रथमवर्षे कृच्छ्रः। द्वितीयेऽति- कृच्छ्रः। तृतीये कृच्छ्रातिकृच्छ्रौ। ततश्चान्द्रम्। मयूख इदं ज्येष्ठस्यैव। तच्च दायकालदायाद्यकालगृहपतिमरणरूपकालत्रयातिक्रमे। कनिष्ठस्य तु सति ज्येष्ठ औपासनाग्निरहितेऽनधिकारादेव न प्रायश्चित्तम्। एवं पितरि तादृशे सुतस्यापि। इत्यनाहिताग्नितापायश्चित्तम्॥

अथापण्यविक्रये प्रायश्चित्तम्—अपण्यस्य लवणादेर्विक्रयो हि सः। तत्र सुराविक्रये सौम्यकृच्छ्रचतुष्टयम्। गुडतिलपुष्पफलमूलपक्वान्नविक्रये सौम्यकृच्छ्रः। मत्या प्राजापत्यम्। लाक्षालवणमधुमांसतैलक्षीरदधितक्र- घृतगन्धचर्मरक्तवस्त्रतिलाद्यन्यतमविक्रये चान्द्रम्। मत्याऽभ्यासे तत्त्रयम्। अमत्या सकृदुपवासः। पयःपायसापूपेक्षुरसगुडखण्डादीनां स्नेहपक्वा- नां च विक्रये पराकः। पूगमञ्जिष्ठाखर्जूरद्राक्षाणां प्राजापत्यम्। पन- सस्य त्रिदिनम्। कदलीनीरनारीकेलजम्बीरबीजपूरकनारङ्गाणां पाद- कृच्छ्रः। कर्पूरादेरर्धकृच्छ्रः। कस्तूरिकादीनां कृच्छ्रः। ऊर्णाकेशकेस- रिणां भूधेन्वनडुहाश्मशस्त्राणां च विक्रये चान्द्रम्। अभक्ष्यमांसतदस्थि- शृङ्गनखशुक्तिहिङ्गुगुग्गुलसर्वरसहरितालमनःशिलाञ्जनलवणक्षारमणि- मुक्ताप्रवालवैणववेणुमृन्मयानां तप्तकृच्छ्रः। अमत्या सकृदुपवासः। विषशस्त्रगोनीलीकौशेयविक्रये प्राजापत्यम्। कृष्णपीतादिवस्त्रकृष्णाजि- नकृष्णवस्तुविक्रये त्र्यहम्। गजविक्रये चान्द्रम्। खराश्वाश्वतरकरभा- णां विक्रये पराकः। नारीविक्रये चान्द्रम्। पुरुषविक्रये तद्द्वयम्। कन्यापुत्रविक्रये तद्द्वयं द्विगुणम्। एकाहाद्वेदविक्रये चान्द्रम्। अङ्गानां विक्रये पराकः। स्मृतीनां कृच्छ्रम्। इतिहासपुराणानां सांतपनम्। रहस्यपञ्चरात्राणां कृच्छ्रः। इतरविद्यामात्रस्य पादकृच्छ्रम्। सोमवि- क्रय उक्तप्राण्यतिरिक्तप्राणिविक्रये च तप्तकृच्छ्रः पुनरुपनयनं च। तुषकपालभस्मरोमपिण्याकानां प्राजापत्यम्। मधूच्छिष्टत्रपुसीसकृष्ण- लोहोदुम्बरखड्गपात्रगोधूमविक्रये सांतपनम्। आगमतडागोदपानपुष्क-

रिणीसुकृतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारो गायत्री-दशसहस्रं जपन्संवत्सरेण शुध्येत् । हीनमानहीनोन्मानाभ्यां विक्रयेऽन्य-मिश्रितान्यवस्तुविक्रये चैवम् । तत्र मानं प्रस्थादि । उन्मानं तुलादि । विषमतुलाधारणेऽर्धकृच्छ्रः । निगडादिविक्रये प्राजापत्यम् । प्रतिश्रयो-द्यानसभाप्रपादिविक्रये तप्तकृच्छ्रः । अत्र सर्वत्र दण्डशास्त्रपर्यालोचनेन प्रायश्चित्ते न्यूनाधिक्यं योज्यम् । तिलतैलदधिक्षौद्रलवणद्राक्षामद्यमांस-पक्वान्नस्त्रीपुरुषहस्त्यश्वगोवृषभगन्धरसक्षौमकृष्णाजिनसोमनीलीविक्रया-त्सद्यः पतति विप्रः । प्रायश्चित्तं त्वकामकृते । एतत्सर्वमापदि वैश्यवृत्त्या जीवतो विप्रस्यैव । अनापदि तु वैश्यभिन्नानां सर्वेषामेव । शूलपाणि स्तु—आपदि शूद्रस्यैव दोषाभावः । क्षत्त्रियस्यापि भवत्येव प्रायश्चित्त-मित्याह । शूद्रस्याऽऽपद्यपि मधुचर्मलाक्षासुरामांसानां विक्रये दोष एव। तिलगोधूमादीनां तु क्रीतानां विक्रय एव दोषः । कृष्युत्पादितानां विक्रये तु नेति बोध्यम् । इदं च प्रायश्चित्तजातं तत्तद्विक्रयार्जितधनो-त्सर्गपूर्वकं कार्यमनापदि । इत्यपण्यविक्रये प्रायश्चित्तम् ॥

अथ परिवेदनप्रायश्चित्तम्—अकृतविवाहोऽग्रजोऽनुजेन प्रागात्मनो विवाहं कुर्वताऽतिक्रान्तः स परिवित्तिः । स च प्राजापत्यं चरित्वा कनीयसा पूर्वपरिणीतां तेन दत्तामुद्वहेत् । तस्यैव हि सा भार्या नानु-जस्य । अशास्त्रीयत्वात्तद्विवाहस्य । अनुजश्च व्युत्क्रमेण विवाहजन्यदो-षवान्परिविदानः परिवेत्ता चोच्यते । अयममत्या चेत्तदा चान्द्रादिष्वेकं कृत्वोढां ज्येष्ठाय दत्त्वा पुनरन्यामुद्वहेत् । यद्वा तामेव ब्रह्मचर्याहृतभै-क्षवद्गुरुं परिभवपरिहारार्थं निवेद्य तेनानुज्ञातां पुनस्तामुद्वहेत् । इदमेव युक्तम् । मत्या चेत्त्रैमासिकम् । अकामतश्चेत्कृच्छ्रातिकृच्छ्रौ कृत्वैव कुर्यात् । इदं कन्यापित्रादिदत्तोद्वाहे देशान्तरे स्थिते ज्येष्ठे कृतविवा-होऽसाविति भ्रान्तिमतः परिवि(वे)त्तुः । कन्यापित्राद्यपरिज्ञाने तत्पित्रादि-भिरदत्तां बलात्कारादिना कामतो ज्ञात्वा चोद्वोढुरब्दं प्राजापत्यादि-प्रायश्चित्तपूर्वकं पूर्वोक्तम् । परिवेत्तुरब्दविषये परिवित्तस्य ज्येष्ठस्य द्वौ कृच्छ्रौ । परिवेदनीयायाः कृच्छ्रः । पित्रादेर्दातुः कृच्छ्रातिकृच्छ्रौ । परि-कर्त्ता तद्याजकस्तस्य चान्द्रायणम् । इदं निर्गुणे ज्येष्ठे । गुणवति ज्येष्ठे

बुद्धिपूर्वकपरिवेदने परिवेत्रादयः परिकर्त्रन्ताः सर्वे पतिताः संवत्सरप्राजापत्यैः शुध्येयुः । दत्तकादीनां तु नायं दोषः—

भिन्नोदरे च दत्ते च पितृव्यतनये तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

इति गौतमस्मरणात् । भिन्नोदर इति सापत्नभ्रातृविषयम् । दत्ते चेति जनककुले ज्येष्ठभ्रातृसत्त्वेऽपि न दत्तकस्य विवाहादौ परिवेत्तृत्वं नापि ज्येष्ठस्य परिवित्तित्वमित्यर्थः । पितृव्यतनय इति देवरेणोत्पादितस्य भ्रातुः क्षेत्रजपुत्रस्य विवाहादौ देवरपुत्रादेः परिवेत्तृत्वादिकं नेत्यर्थः । एवं ज्येष्ठायामनूढायां या कनिष्ठा विवाहिता साऽग्रेदिदिषुः ज्येष्ठा तु दिधिषुः । तत्राग्रेदिधिषुपतिः कृच्छ्रं कृत्वा पुनस्तामेवोद्वहेत् । दिधिषुपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा कनीयस्याः पत्ये तां निवेद्य तस्मै नत्वा तेनानुज्ञातस्तां पुनरुद्वाहयेत् । एवं कन्ययोर्योज्यम् । ज्ञानकामकारबलात्कारादिविषये पूर्वोक्तं संवत्सरादिकं व्यवस्थया योज्यम् ।

अथानाहिताग्नितायां प्रायश्चित्तम्—

अनाहिताग्नौ ज्येष्ठे तु कनीयानादधीत चेत् ।
पर्याधाता कनिष्ठः स्याज्ज्येष्ठः पर्याहितः स्मृतः ॥

तयोः संवत्सरव्रतम् । इदं ज्ञात्वा कामतः करणे । अन्यथा प्राग्वद्योज्यम् । क्लीबवृषलीपतिविरक्तसंन्यस्तातिरोगिजडमूकगरदबधिरकुब्जवामनपङ्गुवृद्धतस्करविवाहानिच्छुशूद्रतुल्यमृतभार्याणां परिवेदने दोषो न । एवं धने कृष्यादौ वेश्यायां वाऽऽसक्त्या दाराग्निहोत्रानिच्छुपरिवेदनेऽपि । धनधर्मविद्यार्जनार्थं देशान्तरस्थे ज्येष्ठे द्वादशवर्षं प्रतीक्षा । कार्यान्तरार्थं देशान्तरस्थे दशवर्षम् । इति परिवेदनप्रायश्चित्तम् ॥

अथ भृतकाध्ययनादिप्रायश्चित्तम्—पणपूर्वकाध्यापकादध्ययनग्रहणं भृतकाध्ययनम् । पणपूर्वकमध्यापनं च भृतकाध्यापनम् । तत्कर्तारौ पयसा ब्राह्मीं सुवर्चलां त्रीन्पक्षान्नियतं पिबेताम् । अनापदि शक्त्याद्यपेक्षया चान्द्रादिष्वेकम् । अनुप्रयोगप्रदानेऽप्येवम् । उत्कर्षहेतोरधीयानस्य किं पठसि नाशितं त्वयेत्येवं पर्यनुयोगोऽनुप्रयोगदानम् ।

अनुप्रयोगदानाभ्यासे पातित्यमाहुः । इति भृतकाध्ययनादिप्रायश्चित्तम् ॥

अथ पारदार्यप्रायश्चित्तम्—पारदार्यं च गुरुतल्पं तदातिदेशिकतत्समव्यतिरिक्तपरस्त्रीगमनरूपम् । पुरुषान्तराव्यभिचरितां जातिमात्रविप्राभृतौ विप्रो गत्वा पूर्वोक्तं वार्षिकं ब्रह्मचर्यव्रतम् । धर्मादिकर्मशीलत्वादिगुणशालिनीं तादृशीं गन्तुर्विप्रस्य द्विवार्षिकं प्रायश्चित्तम् । श्रोत्रियपत्न्यां तादृश्यां त्रिवार्षिकं तत् । ताभिर्यदि द्रव्यं दत्तं भवेत्तर्हि तत्संत्यज्य प्रायश्चित्तम् । द्वित्रिचतुर्वारगमने क्रमेण द्वित्रिचतुर्गुणम् । अग्रे च पातित्यम् । एवं द्वितीयतृतीयादिगमनेऽपि । शूलपाणिमिताक्षरादयस्त्वेकस्यामेव द्वित्रिवारगमने पूर्वोक्तमेव पादहान्येति प्रोचुः । क्षत्रियादीनां स्वस्ववर्णासु गमने पादहानिः । विप्रस्य क्षत्रियादिस्त्रीषु द्विवार्षिकात्रिवार्षिकषण्मासिकानि गुणवतीषु । शूद्रस्य परकीयायां गुणवत्यां शूद्रां गन्तुः षाण्मासिकम् । अकामतः सर्वत्रैतदर्धम् । स्वभर्तृव्यतिरिक्तसवर्णैकपुरुषगामिन्यां गन्तुः पूर्वोक्तमेव पादहान्या कार्यम् । पुरुषद्वयगामिन्यां द्विपादहानिः । पुरुषत्रयगामिन्यां त्रिपादहानिः । पुरुषचतुष्टयगामिन्यां स्वैरिणीसंज्ञिकायां विप्रायां गन्तुस्त्र्यहोपवासपूर्वकं घृतपात्रदानम् । तादृश्यां क्षत्रियायामुपवासत्रयपूर्वकमाढकयवदानम् । वैश्यायां गन्ता चतुर्थकालाहारो विप्रान्भोजयेत् । शूद्रायां गन्तुः सचैलस्नानपूर्वकमुदकुम्भदानम् । पञ्चमादिगामिन्यां बन्धकीसंज्ञायामष्टमुष्टियवदानम् । तादृश्यां शूद्रायां विप्रस्योदकुम्भदानम् । क्षत्रियायां धेनुदानम् । वैश्यायां वस्त्रदानम् । अभ्यासे प्रायश्चित्तावृत्तिः । गौडास्तु विप्रादेः क्षत्रियादिगमनस्यैवार्धार्धादिहानिमाहुः । अनृतौ जातिमात्रविप्रां विप्रो गत्वा मानवं त्रैमासिकं कुर्यात् । ईदृशक्षत्रियादिस्त्रीषु क्रमेण द्वैमासिकचान्द्रायणमासिकानि । क्षत्रियादीनां स्वस्ववर्णास्वनृतौ गमने द्वैमासिकान्येव । आसु गर्भोत्पत्तौ तु तत्तद्विषये सर्वत्रोक्तमेव द्विगुणं कार्यम् । शूद्रायां गर्भोत्पत्तौ तु त्रीणि वर्षाणि चतुर्थकाले नक्तं भुञ्जीत । विप्रस्यानिच्छन्तीषु विप्रादिस्त्रीषु गन्तुरनुक्रमेण गोघ्न त्रैमासिकद्वैमासिकचान्द्रमासिकानि । गोभिन्नासु तिर्यग्योनिषु, महिषीगर्दभादिषु गमने सचैलस्नानं गोभ्यस्तृणभारदानं च । एक उपवासो वा । कामतोऽभ्यासे कृच्छ्रपादम् । अत्यन्ताभ्यासे प्राजापत्यम् । शुनी-

गमनाभ्यासेऽतिकृच्छ्रः । गवि सकृद्गमन उपवासत्रयपूर्वकं गोदानम् । कामतस्तु त्रैमासिकं गोघ्नव्रतम् । कामतोऽभ्यासे प्राजापत्यं त्रैमासिकं च । कामतोऽत्यन्ताभ्यासे संवत्सरव्रतम् । आजन्मात्यन्ताभ्यासे गुरुतल्पसमम् रजकचर्मकारबुरुडकैवर्तमेदभिल्लाः सप्तान्तेवसायिनस्तेषां स्त्रीषु व्याधशैलूषनटवेणुजीविकापालकम्लेच्छादिस्त्रीषु च विप्रस्य च कामतः सकृद्गमने चान्द्रद्वयम् । अमत्या पराकश्चान्द्रं वा । रेतःसेकात्प्राङ्निवृत्तौ कायम् । एतदभ्यासे तु कायावृत्तिः । आस्वेव कामतोऽभ्यासे कृच्छ्राब्दम् । अज्ञानात्तथाऽभ्यासे चान्द्रद्वयम् । गर्भोत्पत्तौ त्रैवार्षिकम् । अज्ञानत आसु चतुर्विंशतिवारगमनात्पातित्यम् । ज्ञानतस्तदर्धादिति गौडाः । संवत्सरादर्वागज्ञानतो द्वादशधा गमनादज्ञानतश्चतुर्विंशतिवारं गमनाभ्यासे च द्वौ मासौ भैक्षभुक्द्वौ मासौ गोमूत्रयावकभुक्द्वौ मासौ पञ्चगव्याशी । एवं षण्मासाच्छुध्यति । अन्त्यजवच्छौण्डिकादिस्त्रीषु योज्यम् । अमत्या सकृद्वक्ष्यमाणचाण्डालादिस्त्रीषु गमने षडब्दम् । गर्भोत्पत्तौ द्वादशवार्षिकम् । ज्ञानतोऽभ्यासे वाऽग्निप्रवेशादिना मरणमेव । क्षत्रियादीनां पादहानिः । ज्ञाने तु सर्वेषां मरणमेव । अनुपनेतृभ्रातृजायायां मत्या सकृद्गमने चान्द्रम् । मत्या क्रियासिद्धेः प्राङ्निवृत्तौ चान्द्रम् । मत्या क्रियासिद्धिपर्यन्तं सकृद्गमनेऽमत्याऽभ्यासे च संवत्सरं विप्रकुले भैक्षम् । मत्याऽभ्यासे तु गुरुतल्पसमम् । एतदेवानुपनेतृपितृव्यमातुलजाययोर्विधवासु परस्त्रीषु गमने कृच्छ्राधिकं तत्तत्पूर्वोक्तप्रायश्चित्तम् । आसु रजस्वलासु गमने प्रकीर्णकप्रकरणोक्तरजस्वलाप्रायश्चित्तैः सह तेषां समुच्चयः । तत्राप्याधिकेन न्यूनस्य प्रसङ्गात्सिद्धिः । साम्ये तु तन्त्रम् । यत्तु रजस्वलागमनमनुपातकमिति तत्तादृश्यां श्रोत्रियपत्न्यां कामतोऽभ्यासे बोध्यम् ।

अथ स्त्रीणां प्रायश्चित्तम्—

यत्पुंसः पारदार्येषु तच्चैनां चारयेद्व्रतम् ॥ इति ।

स्त्रीणामर्धमिति तु स्त्रीपुंससाधारणव्रतोपदेशविषयम् । इदं च स्त्रीणां समानेषूत्तमेषु वा वर्णेष्विच्छापूर्वकव्यभिचार एव । अनिच्छन्त्यास्तु मलिनाया अधःशयानायाः पिण्डमात्रोपजीविन्या गृहे भर्त्रा गुप्तमवरुद्धायाः कृच्छ्रं पराको वा शक्त्यपेक्षया । अभ्यासे चान्द्रम् । अका-

मतो ब्राह्मण्या वैश्यक्षत्रियगमने मासं तदर्धं च क्रमेण गोमूत्रयावकपानम्। ज्ञानतस्तु सकृच्छ्रं चान्द्रद्वयम्। सकृच्छ्रचान्द्रमेकं चान्द्रं च क्रमेण। अनिच्छन्त्याः स्वपतिभ्रान्तिमत्या वा शूद्रगमने रेतःसेकात्प्राङ्निवृत्तौ सकृच्छ्रं चान्द्रम्। रेतःसेके सकृच्छ्रं चान्द्रत्रयम्। बुद्धिपूर्वकं गर्भपर्यन्तं क्षत्रियवैश्यगमनाभ्यासेऽनिच्छया क्षत्रियवैश्यगर्भप्रसवे च कृतचिह्नाया निर्वासनम्। शूद्रविषये तु कामतः संगमे गर्भानुत्पत्तावप्यनिच्छयोत्पन्नगर्भस्रावेऽपि च तथा निर्वासनम्। तादृशक्षत्रियाया वैश्यगमने सकृच्छ्रं चन्द्रायणम्। शूद्रसंगमे सकृच्छ्रं चान्द्रद्वयम्। वैश्यायास्तादृश्याः शूद्रसंगमे सकृच्छ्रं चान्द्रम्। शूद्रायाः शूद्रगमने प्राजापत्यम्। अज्ञानतः क्षत्रियाया विप्रक्षत्रवैश्यगमनेषु क्रमेणार्धकायंकायातिकृच्छ्राणि। वैश्याया विप्रक्षत्रियवैश्येषु गमने कृच्छ्रपादकृच्छ्रार्धकायानि। शूद्राया विप्रक्षत्रियवैश्येष्वहोरात्रत्रिरात्राधिकृच्छ्राणि। विप्राया गर्भोत्पत्तौ तत्प्रसवे च विप्रगर्भे पराकः। क्षत्रगर्भे चान्द्रम्। वैश्यगर्भे सपराकं चान्द्रम्। इदमकामतः कामतश्चेद्द्विगुणम्। सर्वत्र प्रागुक्तेन समुच्चय इत्यूह्यः। यदा शूद्रगर्भं प्रसूते तदा त्यागः पतितत्वात्। केचिद्विप्रायाः शूद्रगर्भस्रावे पाते च चान्द्रत्रयम्। कामतो द्विगुणमित्याहुः। एवं क्षत्रियवैश्यस्त्रियो विप्रादिगर्भे पादपादन्यूनम्। यदा त्वाहितगर्भा एव व्यभिचरन्ति तदा गर्भबाधशङ्कया दशमासोत्तरं प्रसवे सति प्रायश्चित्तमाचरेयुः। गर्भस्य तु न दोषः। तच्च मासं यावकपानम्। यदा त्वौद्धत्यात्स्त्रियः प्रायश्चित्तं नेच्छन्ति तदा तासां नासाकर्णादिकर्तनम्। यदा विप्रस्त्री प्रागुक्तरजकादीनकामतो गच्छति तदा चान्द्रत्रयम्। चाण्डालाद्यन्तेवसायिगमने तु चान्द्रचतुष्टयम्। मत्या द्विगुणम्। रेतःसेकात्प्राङ्निवृत्तौ चान्द्रमेव। गर्भोत्पत्त्यनन्तरमन्त्यजगमने तु प्रसवोत्तरमेव प्रायश्चित्तम्। तदनुष्ठानं यावत्पृथगवतिष्ठेन्न तु गृहे प्रचरेत्। तच्च सार्धकृच्छ्राब्दं हिरण्यं वासो धेनुर्वा दक्षिणा। इदमकामतः। मत्याऽन्त्यजसंगमे तु मरणाच्छुद्धिः। रजकादितो गर्भोत्पत्तौ च त्याग एव। प्रायश्चित्ताकरणे तु पुंलिङ्गेनाङ्कनीया। वध्येत्यन्ये। अनिच्छन्त्या बलादानुलोम्येन व्यभिचारे कृच्छ्रम्। द्विर्भोगे पराकः। त्रिरैन्दवम्। रेतःसेकात्प्राङ्निवृत्तावुपवासत्रयम्। एवं बन्दिग्राहं गृहीत्वा बलाद्भुक्तायाः सांतपनम्। तथाऽन्त्यजाद्युपभोगाभ्यासे त्याग एव। मनसा भर्तुरभि-

चारे त्रिरात्रं क्षीरोदभोजनमधःशयनं चतुर्थेऽहन्यप्सु मग्नाया द्वात्रिंशदधिकचतुःशतावृत्तगायत्रीमन्त्रेणाभिषेकः । वाचाऽभिचारे मासं क्षीरौदनम् । अन्यत्प्राग्वत् । रजोदर्शने तु तेनैव वाचिकमानसिकव्यभिचारशुद्धिः । प्रायश्चित्तं तु रजोदर्शनात्प्राग्व्यवहार्यत्वसिद्धये । पतिघ्न्या गुरुशिष्यादिगर्भायाः कृतचिह्नाया गृहान्निर्वासनमेव । इदमपि प्रसव एव न तु स्रावादौ । अन्यगर्भायास्तु यावत्प्रायश्चित्तं गृहे निरोध एव । शूद्रस्य विप्रस्त्रीगमनवीरणकुशवेष्टितस्याग्नौ दहनम् । विप्रस्त्रियास्तु वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां खरमारोप्य राजमार्गे भ्रामयेत् । ततः पूता भवेत् । वैश्यस्य लोहितदर्भैर्वेष्टितस्याग्नौ प्रक्षेपणम् । विप्रायाः प्राग्वत् । क्षत्रियस्य शरपत्रैर्वेष्टितस्य तत् । विप्रायाः पूर्ववत् । एवं वैश्यस्य राजकन्यायां शूद्रस्य राजन्यवैश्यस्त्रीगमनेऽपि ज्ञानत इच्छापूर्वकसंगम इदम् । अकामतः स्वभार्याभ्रान्त्या शूद्रस्य विप्रस्त्रीगमने द्वादशवार्षिकम् । वैश्यस्य नवाब्दम् । क्षत्रियस्य षडब्दम् । एवं शूद्रस्य क्षत्रियवैश्यस्त्रीगमने षड्वार्षिकम् । वैश्यस्य क्षत्रस्त्रीगमनेऽपि षडब्दम् । एतदपि गर्भानुत्पत्तौ । गर्भोत्पत्तौ द्विगुणम् । शूद्रस्याकामतोऽत्यन्तव्यभिचारिविप्रस्त्रीगमने मासं गोमूत्रयावकाहारकता । वैश्यक्षत्रिययोः कृच्छ्रं सांतपनम् । इति पारदार्योपपातकप्रायश्चित्तानि ।

अथ परिवित्तिवार्धुष्यलवणक्रियाप्रायश्चित्तानि—कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यं पारिवित्त्यम् । तद्वान्परिवित्तिः । तत्प्रायश्चित्तं परिवेदनप्रकरण एवोक्तम् । वार्धुष्यं निषिद्धवृद्ध्युपजीवनम् । तत्र चान्द्रादिष्वेकं त्रैमासिकं वा जातिशक्तिगुणाद्यपेक्षया योज्यम् । लवणक्रिया लवणोत्पादनम् । तत्राप्येवं बोध्यम् । इति परिवित्तिवार्धुष्यलवणक्रियाप्रायश्चित्तानि ॥

अथ स्त्रीशूद्रवैश्यक्षत्रवधप्रायश्चित्तानि—तत्रानात्रेय्या अगर्भिण्याः स्त्रिया वधः स्त्रीवधः । कामतो गुणवत्तरब्राह्मणीवधे विप्रस्य षड्वार्षिकं ब्रह्महत्याव्रतम् । क्षत्रियवैश्यशूद्रजातिस्त्रीवधे तदर्धतदर्धतदर्धानि । अमत्या चेत्सर्वत्र तत्तदर्धम् । सापत्नमातृभगिनीस्नुषाभार्याद्यतिप्रत्यासन्नगुणवत्तरावधेऽप्येतदेव । निर्गुणतरसापत्नभगिनीपितृष्वसृमातृष्वसृ

मातुलानीपितृव्यजायाभ्रातृव्यजायाश्वश्रूणां वध एतदेव पादोनम्। निर्गुणतरायाः सपिण्डसगोत्रस्त्रिया वधेऽर्धम्। असोमपाग्निहोत्रिश्रोत्रियपत्नीत्वादिगुणविशेषे द्विगुणम्। गुणानामाधिक्ये प्रायश्चित्ताधिक्यम्। सकृत्सवर्णव्यभिचारिणीनां ब्राह्मण्यादीनां वधे वृषभैकादशगोदानदक्षिणासहितं संवत्सरव्रतं गोदानसहितषाण्मासिकव्रतं धेनुसहितसांतपनं धेनुद्वयदानं चेति क्रमेण। इदं कामतः। अकामतश्चेत्तदर्धम्। अथ सकृत्सवर्णव्यभिचरितास्वप्रसूतास्वर्धम्। प्रातिलोम्येन व्यभिचरितब्राह्मण्यादिवधे तु गोवधोक्तं यथार्हं योज्यम्। प्रातिलोम्येनात्यन्तव्यभिचरितानां तत्प्रसूतानां ब्राह्मण्यादीनां वधे क्रमेण चर्मकार्मुकच्छागमेषदानानि। चर्मात्र चर्ममयं जलभाण्डम्। अज्ञानत इदम्। ज्ञानतस्तु द्विगुणम्। स्मृत्यर्थसारे तु ज्ञानतो वधे षट्चतुर्द्व्येकमासाः। प्रसूतादीनां वधे चैवमित्युक्तम्। अप्रसूतासु किंचिदधिकम्। अनुलोमेनात्यन्तव्यभिचरितासु ततोऽपि किंचिदधिकम्। गणिकाकर्मणा जीवन्तीनां विप्रादिकान्तानां वधे किंचिज्जलदानम्। जलस्पर्शमात्रमित्यन्ये। अपत्यादिहननशूद्रगमनादिभिरतिदुष्टब्राह्मण्यादिवधे तु न किंचित्प्रायश्चित्तम्। किंतु विपरीतं पुण्यमेवेत्याहुः।

जातिमात्रक्षत्रियवैश्यशूद्रवधेषु क्रमेण त्रैवार्षिकवार्षिकषाण्मासिकानि ब्रह्महत्याव्रतानि। त्रैमासिकसार्धनवमासिकानीत्यन्ये। अमत्येदम्। मत्या तु द्विगुणम्। क्षत्रियादिकर्तृक एतद्वधे पादपादहानिः। प्राञ्चस्तु–अमत्या जातिमात्रक्षत्रवधे नव कृच्छ्राणि। तादृग्वैश्यवधे चत्वारि। शूद्रवधे द्वयम्। ज्ञानतः सर्वत्र द्विगुणमित्याहुः। नृपतिवधे द्वादशवार्षिकम्। प्रयोजकादीनां पादपादहानिः सर्वत्र। अत्र सर्वत्र शवशिरःकपालध्वजताऽऽवश्यकी। कामतः सकृत्प्रतिलोमसूतवधे चान्द्रम्। वैदेहवधे पादोनम्। चाण्डालवधे द्विपादम्। मागधवधे पादोनम्। आयोगववधे द्विपादम्। ज्ञानतोऽर्धम्। चाण्डालवधे द्विचान्द्रमित्यर्थः। द्विगुणमन्त्यजातिवधे। ततः स्त्रीवधे षड्रात्रमुपवासस्तिलदानं चेत्याहुः। चोराणामेतेषां वध एकोपवासपूर्वकं घृतप्राशनम्।

अथान्यहिंसायाम्–तत्रास्थिमतां कृकलासादीनामनुक्तप्रायश्चित्तानां सहस्रवधेऽनस्थिमतां क्षुद्राणां जलूकमत्कुणयूकादंशादीनां शकटपूर्णवधे

कृमिकीटपतंगपिपीलिकाभ्रमरदंशमक्षिकादीनां सहस्रवधाभ्यासे च षाण्मासिकं शूद्रहव्रतम् । दशधेनुदानं वा । परिमाणाधिक्ये प्रायश्चित्ताधिक्यम् । इतोऽल्पपरिमाणवधे मलिनीकरणत्वात्त्र्यहं तप्तयावकपानम् । अमत्याऽल्पैतद्वधे घुणादिजन्तुवधे च किंचिद्देयम् । अष्टमुष्टिमितं धान्यं किंचित् । ततोऽप्यल्पे क्षुद्रतमेऽनस्थिजन्तोश्च प्राणायामाः । फलपुष्पधान्यान्तरसंजातप्राणिवधाभ्यासे दिनमेकं घृताहारः । क्षत्रियादीनां पादपादहानिः । स्त्रीणामर्धम् । गौडास्तु कृकलासादिसहस्रवधे जलूकादिशकटवधे च तप्तकृच्छ्रम् । अभ्यासे प्रागुक्तमित्याहुः ।

मार्जारगोधानकुलमूषकमण्डूककुक्कुटचाषकाकोलूकश्वसर्पादीनां प्रत्येकं वधे पादकृच्छ्रम् । त्रिरात्रं क्षीरपानं वा । एकवर्षवत्सदानं वा । समुद्रगानदीस्नानं वा । योजनगमनं वा यथार्हं योज्यम् । मत्या द्विगुणम् । अभ्यास आवृत्तिः । मत्याऽभ्यासे कायम् । समुदितवधाभ्यासे षाण्मासिकं शूद्रवधव्रतम् । दशधेनुदानं वा । अत्र कपालधारणादिकं नास्ति । कोकिलाकपोतशुककपिजलटिट्टिभखञ्जरीटानां पुरुषभारवधेऽप्येतदेव । गजवधे पञ्चनीलवृषभदानम् । हयवधे तु वरवस्त्रयुगमम् । उष्ट्रे गुञ्जाभारः स्वर्णं वा गुञ्जामितम् । खरे वृष एकवर्षवत्सो वा । अजामेषयोरप्येवम् । अत्राभ्यासे त्रिरात्रमुपवासोऽपि । अत्यन्ताभ्यासे सप्तरात्रोपवासश्च । हंससारसपारावतमयूरचक्रवाकबकबलाकाविषजकङ्कप्लवित्कारण्डवश्येनभासराजपक्षादिषु गौर्देया । गृध्रकाकोलूककपोतकुक्कुटबृहत्पक्षादिषु त्रिवर्षो वत्सः । शुकचाषखञ्जरीटलावकसारिकादिषु द्विवर्षवत्सः । टिट्टिभतित्तिरकारण्डवचटकादिषु क्षुद्रपक्षिष्वेकवर्षो वत्सः । क्रव्यादव्याघ्रसृगालादिवधे वानरहंसश्येनकङ्कगृध्रादिषु जलचरबलाकादिपक्षिषु स्थलचरकाकादिषु भासे मयूरे च प्रत्येकं वधे धेनुर्देया । अक्रव्यादहरिणादिमृगेषु खञ्जरीटादिपक्षिषु च वत्सतरी देया । सर्पादिसरीसृपेषु लोहदण्डस्तीक्ष्णोभयाग्रः । यद्वा शुकेषु द्विवर्षो वत्सः । क्रौञ्चे त्रिवर्षः । महिषादिवधे वत्सतरी । वराहे घृतकुम्भः । तित्तिरौ तिलद्रोणः । नपुंसकमृगपक्षादिवधे माषमितं सीसं पलालभारो वा ।

अत्र दानाशक्तौ तु स्मृत्यर्थसारे —गजाश्वोष्ट्रखरगौरगवयऋक्षमहि-

षमेषादिष्वमत्या प्रत्येकं वधे सार्धकृच्छ्रः । समस्तवधे चान्द्रम् । मत्या समस्तवधेऽपि चान्द्रम् । मत्या समस्तवधे त्वावृत्तिश्चान्द्रस्य । हरिणसारङ्गरुरुवराहसिंहगण्डकव्याघ्रमहामत्स्यग्राहशिशुमारादिष्वमत्या प्रत्येकं कृच्छ्रः । समस्तवधे कृच्छ्रद्वयम् । मत्या प्रत्येकं वधे चैवम् । समस्तवधे चान्द्रम् । श्ववृकवानरजम्बूकविड्वराहादिष्वमत्या प्रत्येकं त्रिरात्रम् । समस्तवधे कृच्छ्रः । मत्या प्रत्येकं वधे चैवम् । समस्तवधे द्विगुणम् । मार्जारसर्पाजगरडुण्डुभनकुलमण्डूकमूषककर्कटशलभसेधागोधाशल्यककूर्मशशादिष्वमत्या प्रत्येकं वधे पादकृच्छ्रः । समस्तवधे त्वर्धकृच्छ्रः । मत्या प्रत्येकं वधे चैवम् । समस्तवधे कृच्छ्रः । हंसादिष्वमत्या प्रत्येकं वधे कृच्छ्रः । गृध्रादिषु पादन्यूनः । शुकादिष्वर्धकृच्छ्रः । मत्या द्विगुणम् । टिट्टिभादिषु पादः । समस्तवधादौ द्विगुणम् । हरिणादिषु हंसादिषु च हन्तृबहुत्वे प्रत्येकं त्रिरात्रम् । श्वादिषु गृध्रादिषु चैवम् । गजादिषु प्रतिपुरुषं कृच्छ्रः । मार्जारादिशुकादिषु च प्रत्येकमुपवासः । टिट्टिभादिषु प्रतिपुरुषं नक्तम् । मृतप्रायेषु तु गजादिष्वमत्या प्रत्येकं वधे त्रिरात्रम् । हरिणादिषु द्विरात्रम् । खरादिषु चतुर्थकालाहारः । मार्जारादिषूपवासः । गृध्रादिषु नक्तम् । शुकादिष्वेकभक्तम् । टिट्टिभादिषु जले प्राणायामः । अविज्ञातसर्वमृगपक्षिषु त्रिरात्रमिति । इदं सर्वदेशकालजातिशक्तिगुणाद्यपेक्षया गुरुलघुविषये योज्यम् । इति स्त्रीशूद्रादिवधेऽन्यहिंसायां च प्रायश्चित्तानि ॥

अथ द्रुमादिच्छेदनप्रायश्चित्तम्—वृक्षगुल्मलतागुच्छक्षुपप्रतानौषधिवीरुधां फलपुष्पादिभिरुपयोगिनीनां यज्ञाद्यदृष्टार्थं विना छेदे शतगायत्रीजपः । तत्र वृक्षाः पिप्पलाशोकाम्रपनसाद्याः । गुल्मा मालत्यादयः । गुच्छाः कुरण्टकादयः । क्षुपाः करवीरादयः । प्रतानाः सारिवादयः । ओषध्यः शाल्यादयः । वीरुधो गुडूच्याद्याः । इदमकामतोऽसकृच्छेदे कामतः सकृच्छेदे च । ग्राम्यारण्यौषधिच्छेदनात्यन्ताभ्यासे दिवा तु गोपरिचर्यां कृत्वा रात्रौ क्षीरं पीत्वा स्वपेत् । कामतोऽभ्यासेऽकामतोऽत्यन्ताभ्यासे च वृक्षलताविषयेऽप्यर्धकृच्छ्रः । फलवतां च्छेदे प्राजापत्यम् । कृष्याद्युपकरणादिदृष्टार्थे यज्ञाद्यदृष्टार्थे च च्छेदे तु न दोषः । महाफल-

पदानां नारीकेलादिवृक्षाणां कामतश्छेदनात्यन्ताभ्यासे संवत्सरव्रतम् । सकृच्छेदे तूक्तद्विगुणजपः । एवं चैत्यश्मशानसीमापुण्यस्थानदेवालयस्थे वृक्षेऽन्यस्मिन्नपि चतुष्पथस्थे महाच्छायावृक्षे प्रख्याते वा वृक्षे छिन्ने द्विगुणजपः प्राजापत्यं च बोध्यम् । शूद्रस्य तु दण्डानुसारेण जपस्थाने द्विरात्रोपवासादि कल्प्यम् । इत्थं छिन्नवृक्षादेरग्रहणविषयम् । छित्त्वा परिग्रहणे तु दण्डाधिक्यदर्शनात्प्रायश्चित्तातिरेको बोध्यः । कामतोऽत्यन्ताभ्यासे वृक्षादौ सर्वत्र चान्द्रादिष्वेकम् । इति द्रुमादिच्छेदप्रायश्चित्तम् ॥

अथ प्रसङ्गाच्छ्वादिदंशप्रायश्चित्तम्—श्ववृकसृगालखरोष्ट्रविड्वराहकाककुक्कुटवानरपुंश्चलीक्रव्यादनराश्वैर्नाभेरध ईषद्दष्टो विप्रो जले प्राणायामत्रयं कृत्वा घृतं प्राश्य शुध्यति । अत्र घृतप्राशनं भोजनस्थाने । तेनाऽऽहारान्तरनिवृत्तिः । अत्र सरुधिरदंशे षोडश प्राणायामा आपो हि ष्ठेत्यादिभिः स्नानं चाधिकम् । अतिगाढदंशे समुद्रगायां नद्यां प्राणायामशतमन्यत्पूर्ववत् । अत्र शक्तौ सत्यां ब्रह्मचारिणस्त्रिरात्रं सायं दुग्धपानमेव । गृहस्थस्य द्विरात्रम् । अग्निहोत्रिण एकाहम् । नाभेरूर्ध्वं दंश इदमेव द्विगुणम् । मुखे दष्टस्य त्रिगुणम् । मस्तके दंशे चतुर्गुणम् । मार्जारमूषकनकुलाजमहिषीहीनजात्याऽरण्यमृगैश्च दष्टे दश प्राणायामाः । नाभेरध ईषद्दष्टस्य पञ्च । क्षत्रियादौ पादपादन्यूनम् । शूद्रस्यामन्त्रकप्राणायामाः । उपवासादेव शूद्रस्य शुद्धिरित्यन्ये ।

स्त्रीणां तु श्वादिदंशे स्नात्वोदितस्य नक्षत्रचन्द्रादेर्दर्शनाच्छुद्धिः । कृच्छ्रादिव्रतस्थाया दंशे तु त्रिरुपवासपूर्वकं चतुर्थे यावकभोजनम् । ततो व्रतशेषसमाप्तिः । व्रतस्थस्य पुंसोऽप्येतदेव । जपाद्यधिकं प्राणायामादिकं च । रजस्वलायाः श्वादिदंशे त्वेकोपवासमुपवासपञ्चकं वा कृत्वा षष्ठे पञ्चगव्यपानम् । नाभेरूर्ध्वं तु प्रागुक्तक्रमेण द्वित्रिचतुर्गुणं बोध्यम् । अत्यसमर्थस्य दिवा दंश आ नक्षत्रादभोजनम् । रात्रिदंश आ सूर्यादभोजनं गायत्रीशतजपो वा । यदा तु श्वादिदंशजे वा शस्त्रघातादिजे वा व्रणे कृमय उत्पद्यन्ते तदा गोमूत्रगोमयाभ्यां त्रिसंध्यं स्नानं त्रिरात्रं पञ्चगव्यपानं च । नाभेरूर्ध्वं कण्ठादधः षड्रात्रम् । शिरोव्रणे कृमिषु कायम् । युगपदनेकव्रणेषु कृमिसंभवे सांतपनम् । वृषभश्च दक्षिणा । इदं च श्वादिदंशनिमित्तप्रायश्चित्तसहितमेव । शस्त्रादिव्रणे कृमिदर्शने तु

केवलमेवैतत् । क्षत्रियादीनां पादहानिः । अन्यव्रणेषु कृमिदोषे तूपवासहिरण्यदानकृच्छ्रैः शुद्धिः । इति श्वादिदंशकृमिव्रणादिप्रायश्चित्तानि ॥

अथ निन्द्यार्थजीवनप्रायश्चित्तम्—शास्त्रोक्तोपायार्जितादर्थान्तरेणोपजीवनं निन्द्यार्थजीवनम् । तत्र चान्द्रादिष्वेकं त्रैमासिकं वा जातिशक्त्याद्यपेक्षया । नास्तिक्यं वेदनिन्दनं तेन जीवनं च परलोको नास्तीत्यभिनिवेशश्च । तस्मिन्सकृत्कृते कृच्छ्रः । तेन जीवनेऽतिकृच्छ्रः । अज्ञानतोऽर्धम् । ज्ञानतोऽभ्यासे चान्द्रादिष्वेकम् । अत्यन्ताभिनिवेशेन बहुकालाभ्यासे ग्रीष्मवर्षाहेमन्तर्तुषु क्रमेणाऽऽतपाभ्रावकाशजलशयनानि । पञ्चवर्षं प्रतिग्र(गृ)हेषु भैक्ष्यं वा । इति निन्द्यार्थजीवनप्रायश्चित्तम् ॥

अथ व्रतलोपे ब्रह्मचारिणः प्रायश्चित्तम्—स च ब्रह्मचारिणः पुंस्त्रीमैथुनरूपः । सर्वसाधारणस्तु देवताराधनाद्यर्थं गृहीतव्रतलोपः । प्रायश्चित्तार्थं प्रक्रान्तकृच्छ्रादिव्रतच्युतिश्च । किंचिद्व्रतं संकल्प्य त्यागश्च । संकल्पितस्नातकव्रतादेर्मिथ्याकरणं च । शिष्टाप्रतिषिद्धस्य भोजनव्यतिरेकेण मया जलं न पातव्यमित्यादिनियमत्यागश्च । तत्र कालदेशशक्तिबहुत्वाल्पत्वादिकं पर्यालोच्योपपातकसामान्यप्रायश्चित्तानि योज्यानि ।

अवकीर्णतारूपे ब्रह्मचर्यादिव्रतलोपे तूच्यते—तत्र गुरुतल्पतत्समानेतरां स्त्रियं गत्वा नैर्ऋतदैवतेनैकाक्षेण गर्दभेण पशुनाऽरण्ये चतुष्पथे रात्रौ लौकिकाग्नौ पाकयज्ञधर्मेणाऽऽश्वलायनादिगृह्योक्तपशुकल्पतन्त्रेणेष्ट्वा तस्याजिनमूर्ध्ववालं परिधाय त्रिषवणस्नायी लोहितपात्रः स्वकर्माऽऽचक्षाणः सप्तगृहे भैक्ष्यं कुर्वन्नेकवारभोजी वर्षेण शुध्येत् । एवमशक्तौ नैर्ऋतं चरुं निरुप्य पक्त्वा कामाय स्वाहा । कामकामाय स्वाहा । निर्ऋत्यै स्वाहा । रक्षोभ्यः स्वाहा । देवताभ्यः स्वाहेति हुत्वा होमशेषं समाप्योक्तमब्दव्रतं चरित्वा शुध्येत् । इदमश्रोत्रियविप्रपत्न्यां श्रोत्रियवैश्यपत्न्यां च ज्ञेयम् । यदा तु गुणवत्योः श्रोत्रियपत्न्योर्विप्रक्षत्रियस्त्रियोरवकीर्णी तदा त्रिवार्षिकं द्विवार्षिकं च व्रतं होमश्च । अमत्याऽवकीर्णत्व ईषद्व्यभिचारिण्यां च तत्त्वे वार्षिकव्रतविषये षण्मासं ब्रह्महव्रतं चीरवासाश्चरेत् । द्विवार्षिकादिविषये त्वमत्याऽर्धम् । अत्यन्तव्यभिचरितशूद्रायां सचैलस्नातस्योदकुम्भदानम् । ताद-

ग्वैश्यायां चतुर्थकालाहारो विप्रान्भोजयेत् । तृणभारं च गोभ्यो दद्यात् । तादृक्क्षत्रियायां त्रिरात्रोपोषितेन घृतपात्रं देयम् । तादृग्वि-प्रायां षडुपवासा गोदानं च कार्यम् । गोष्ववकीर्णस्य कायम् । षण्ढा-वकीर्णस्य पलालभारसीसमाषयोर्दानम् । स्त्रीसंभोगमन्तरेण मत्या रेतो विसर्गे ब्रह्मचारिणो नैर्ऋतयागमात्रम् । दिने स्वप्ने रेतोविसर्गे चैवम् । कृच्छ्रचान्द्रायणादिव्रतेष्वतिदिष्टब्रह्मचर्येषु रेतःस्कन्दनेऽप्ये-वम् । रात्रिस्वप्ने रेतःस्कन्दने ब्रह्मचारी स्नात्वाऽर्कमर्चयित्वा पुनर्मां मै-[त्वि]त्यृचो जपेद्गायत्रीं वा त्रिर्जपेत् । अष्टशतगायत्रीजप इत्यन्ये । वान-प्रस्थयत्योर्मत्या ब्रह्मचर्यलोपे पराकत्रययुक्तमवकीर्णिव्रतम् । मत्या कृच्छ्रत्रयम् ।

अथ प्रसङ्गाद्ब्रह्मचारिणः प्रायश्चित्तमुच्यते—ब्रह्मचारिणोऽनातुरस्य गुरुशुश्रूषादिगुरुतरकार्यव्यग्रतया सप्तरात्रं भैक्ष्यस्याग्निकार्यस्य वा लोपे कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामाय स्वाहा । कामावपन्नोऽ-स्म्यवपन्नोऽस्मि कामकामाय स्वाहा । इत्याभ्यामाज्याहुती हुत्वा, समासिञ्चन्तु मरुतः समिन्द्रः संबृहस्पतिः समाऽयमग्निः सिञ्चत्वायुषा च बलेन चेत्येतेनोपतिष्ठेत् । अव्यग्रतया तल्लोपे त्ववकीर्णिव्रतम् । अन्ये सप्तरात्रमवकीर्णिव्रतमित्याहुः। मणिवासोगवादीनां प्रतिग्रहेऽष्टसह-स्रगायत्रीजपः । उपनयनोत्तरं दिनचतुष्टयव्रतमध्ये मेखलायज्ञोपवीत-दण्डादीनां नाशे वस्त्रं सूत्रान्तरं वा धृत्वा मनो ज्योतिरित्यादिमनो-लिङ्गाभिस्त्वमग्ने व्रतपा असीत्यादिव्रतलिङ्गाभिश्चतस्र आज्याहुती-र्हुत्वोपनयनोक्तविधिना पुनर्मेखलादीनि धारयेत् । असद्भैक्ष्यभोजने सुप्तोदिते सुप्तास्तमिते च वान्ते दिवास्वापे नग्नस्त्रीदर्शने नग्नस्वापे श्मशा-नक्रमणहयाद्यारोहणपूज्यातिक्रमेषु चैतैर्जुहुयात् । यज्ञोपवीतं विना तद-न्यथा वा कृत्वा भोजने विण्मूत्रोत्सर्गे वा गायत्र्यष्टसहस्रजपः । पाने त्रिः प्राणायामाः । फलादिभक्षणे षट् । भोजनमेहनयोरप्येवमित्येके । सूर्योदयस्वापिनो दिवोपवासो दशाधिकसहस्रगायत्रीजपः । अस्तमय-स्वापिनस्तु रात्र्युपवासोत्तरादिने प्रागुक्तजप इत्यन्ये । स्थावरजङ्गम-वृक्षवल्मीकपशुसरीसृपादिप्राणिवधे कूष्माण्डीभिर्होमः । यज्ञोपवीतमेख-लाजिनदण्डानां लोपे व्याहृतिहोमं षट् प्राणायामांश्च कृत्वा पुनर्धारयेत् ।

संध्याग्निकार्यलोपे स्नात्वाऽष्टसहस्रगायत्रीजपः । भिक्षाटनमकृत्वा स्वस्थस्यैकान्नाशनेऽष्टशतजपः । भिक्षायां तु क्वचिदेकान्नाशने दोषो न । शौचाचमनसंध्याभिक्षाग्निकार्यकौपीनमेखलाजिनलोपे शूद्रादिस्पर्शे छत्रपादुकाभ्यङ्गोद्वर्तनानुलेपाञ्जनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखण्डयादिसंभाषणपर्युषितभोजनादिकरणे सकलदोषपरिहारार्थं कृच्छ्त्रयं महाव्याहृतिहोमश्च । बहुकालं बहुतरधर्मलोपे तं वो धियेति मन्त्रस्य शिवालये लक्षजपः । गुरुशुश्रूषाद्यल्पलोपेऽष्टशतजपः । मधुमद्यमांसलशुनभक्षणे कृच्छ्रम् । मत्या पराकः । अभ्यासे द्विगुणं पुनरुपनयनं च । तत आरब्धव्रतस्य समापनम् । मद्यग्रहणं क्षत्रियादिविषयम् । तदेकनाश्यरोगाद्यर्थं मध्वादिकं गुरूच्छिष्टं कृत्वा भोक्तव्यम् । ततो रोगनिवृत्तौ हंसः शुचिषदित्यादित्यमुपतिष्ठेत् । मध्वादेरकामतो भक्षणे दोषो न । गुर्वाज्ञाविघाते गुरोः प्रतिकूलाचरणे च स्नात्वा प्रणिपातादिना गुरुं प्रसाद्य गतकोपदुःखं कृत्वा शुध्येत् । एतदज्ञानपूर्वकं सकृदपराधेऽन्यत्रात्यन्ताभ्यासे पितृविषये ब्रह्महत्यावत् ।

ब्रह्मचारिणो यतिव्रतिनोश्च मासिकादिप्रेतश्राद्धभोजने त्रिरात्रमुपवासश्च चतुर्थे नक्तं प्राणायामत्रयं च पञ्चमदिने घृतप्राशनं च । अनापदि तु कायमेकोपवासः पञ्चगव्यं च । अभ्यासे तप्तकृच्छ्रादि । शूद्रान्नभोजने पराकः । क्षत्रियोच्छिष्टभोजने स्नात्वाऽष्टशतजपो द्वादशदिनमुपवासश्च । उच्छिष्टमत्र तद्भोजनोत्तरं पाकपात्रेऽवशिष्टम् । वैश्यशूद्रोच्छिष्टेऽधिकं कल्प्यम् । चोरव्याघ्रादिभयाकुलदेशे महान्धकारे रात्रौ गुरुणा स्वकार्यार्थं प्रेषितः शिष्यो दैवान्मृतश्चेद्गुरोः कृच्छ्रत्रयम् । सर्वत्राऽऽरोग्यार्थमौषधपथ्यान्नदानेन तदर्थं क्रियमाणयत्नैर्वा गोब्राह्मणादिप्राणिमृतौ न कश्चिद्दोष इति प्रासङ्गिकः सर्वहिंसापवादः । इति व्रतलोपप्रायश्चित्तानि ॥

अथाभिशंसिप्रायश्चित्तम्—यस्तु विप्रो विप्रं महापातकादिना मिथ्याऽभिशंसेदनेन ब्रह्महत्यादिकं गोहत्यादि वा कृतमिति संव्य[व]हर्तृजनान्प्रति मिथ्या ब्रूयात्स मासमम्बुभक्षो नियतेन्द्रियः शुद्धवतीमन्त्रजपशीलः शुध्येत् । इदमुपपातकाभिशंसनाभ्यासे महापातकस्य सकृदभिशंसने च । क्षत्रियाद्यभिशंसने विप्रस्यार्धार्धहानिः । यदा क्षत्रियादयो विप्रमभिशंसन्ति तदा तेषां द्वित्रिचतुर्गुणम् । शूद्रस्य जपस्थानेऽ-

मन्त्रकप्राणायामाः। सत्याभिशंसने सर्वत्र तदर्धम्। अतिपातकमिथ्याभिशंसिनामुक्तमासव्रतं पादोनम्। अनुपातकाभिशंसिनां ततो न्यूनम्। उपपातके सकृदभिशंसने ततो न्यूनम्। उपपातकाभिशंसनाभ्यासे मासव्रतमुक्तम्। प्रकीर्णकेषु सकृदभिशंसने ततोऽपि न्यूनम्। अतिपातकादिष्वभ्यासे किंचिदधिकमूह्यम्। अथ मिथ्याभिशस्तस्य महापातकेषु कृच्छ्रम्। अतिपातकादिषु पादपादह्रासः। मिथ्याभिशस्तस्य वर्षपर्यन्तं प्रायश्चित्ताकरणे मासमम्बुभक्षता। तत्र सार्धकृच्छ्रद्वयम्। महापापाभिशस्तस्य वर्षोत्तरं द्विमासम्। तत्र पञ्च कृच्छ्राः। गुरुविषये कामतो मिथ्याभिशंसनावृत्तौ पञ्चवर्षं विप्रकुले भैक्षाचरणं संवत्सरं वा षण्मासं वा गवानुगमनम्। अत्राभ्यासाभिनिवेशादितारतम्येन व्यवस्था। इत्यभिशंसिमिथ्याभिशस्तयोः प्रायश्चित्तानि॥

अथ सुतविक्रयप्रायश्चित्तम्—स च धनं गृहीत्वा दास्यार्थं कन्यापुत्रादेर्दानम्। एवं भार्याविक्रयेऽप्यूह्यम्। तत्र कन्याविक्रये देवगृहप्रतिश्रयोद्यानारामपुष्करणीसभाप्रपापुण्यसेतुविक्रये सुकृतविक्रये च चान्द्रादिष्वेकम्। अथवा त्रैमासिकम्। आपदि तप्तकृच्छ्रः। अत्यन्तापदि सांतपनम्। पुत्रविक्रये च सर्वं द्विगुणम्। एकपुत्रस्यानापदि कामतः सुतविक्रये च त्रिषवणस्नाय्यधःशायी चतुर्थकालाशी वत्सरेण शुध्यति। ईदृशकन्याविक्रये तदर्धेन शुद्धिः। कामतोऽनापद्यनेकपुत्रस्य सुतविक्रये चान्द्रम्। आपद्येकपुत्रस्य कामतः सुतविक्रये चान्द्रद्वयम्। इति पुत्रकन्याविक्रयप्रायश्चित्तानि॥

सुतविक्रयोत्तरं धान्यपुष्पपशुस्तेय इत्युपपातकगणे पठितं तत्प्रायश्चित्तं स्तेयप्रकरण एवोक्तम्।

अथायाज्ययाजने प्रायश्चित्तम्—तत्र व्रात्ययाजको व्रात्योपनेता व्रात्याध्यापकोऽहीनयाजकः। शूद्रान्त्येष्टिकर्मयाजको वेदविप्लावी तस्करेतरशरणागतत्यागी तस्कररक्षको वशीकरणोच्चाटनादिरूपाभिचारकर्ता चामत्या कृच्छ्रसांतपनातिकृच्छ्रेषु त्रिषु यथायोग्यं क्वचित्समुदितं क्वचिदेकं कुर्यात्। आततायिविषयाभिचारे न दोषः। व्रात्यलक्षणं प्रागुक्तम्। द्विरात्रादिद्वादशाहान्तोऽहर्गणो यज्ञोऽहीनः। मत्या व्रात्यस्योपनयनाध्यापनयाजनेषूद्दालकव्रतम्। मत्या सर्वेष्वेवं वा। उद्दाल-

कव्रतं च व्रात्यप्रकरण उक्तम्। विप्राद्यन्त्येष्टिकर्मसु लोभाद्याजने क्रमेण कार्योऽतिकृच्छ्रस्तप्तकृच्छ्रश्च। अभ्यासे द्विगुणम्। अत्यन्ताभ्यासे त्रिगुणम्। शूद्राद्ययाज्ययाजने तत्पौरोहित्ये तदध्यापने चामत्या चान्द्रादिष्वेकमशक्तौ कृच्छ्रं मत्या त्रैमासिकम्। अभ्यासे द्विगुणादि। कामतोऽत्यन्तशूद्रयाजनाभ्यासे ग्रीष्मवर्षाहेमन्तेषु क्रमेण पञ्चतपोभ्रावकाशजलशयनानि कुर्यात्। गोमूत्रयावकाशनं च। अकामतोऽभ्यासे तल्लब्धसर्वद्रव्यत्यागेन दशसहस्रप्राणायामाभ्यासेन शुध्यति। परिवेदकादियाजनेऽप्येवम्। सर्वत्र लब्धद्रव्यत्यागपूर्वकमेतत्प्रायश्चित्तानुष्ठानम्। एवं पर्वचाण्डालश्रोत्रावकाशाद्यनध्यायेष्वध्ययनमशुचिनाऽध्ययनं वा निषिद्धाध्ययनं निषिद्धाध्यापनं च वेदविप्लावनम्। तत्राऽऽद्ये मत्या त्रिरात्रमुपवासः। अभ्यासे कृच्छ्रम्। अत्यन्ताभ्यासे कृच्छ्रत्रयम्। कामतोऽत्यन्तानवच्छिन्नाभ्यासे संवत्सरं यवौदनभोजनम्। एतदेव गर्हिताध्यापकयाजकयोर्दक्षिणात्यागमात्रमधिकम्। स्मृतिधर्मशास्त्रव्याख्यानेऽधीते च तदर्धम्। नित्यानध्यायेष्वध्ययने यावदधीतं तावज्जलेऽघमर्षणवत्स्वाध्यायं जपेत्। अशक्तौ जले स्थित्वा जपमात्रम्। अत्यशक्तः स्थले जपेत्। मत्या प्रत्यनध्यायमुपवासः। अशुचिनाऽध्ययने चैवम्। नैमित्तिकानध्यायेष्वध्ययने चाप्येवम्। दुर्बोधस्य तदर्धम्। काककुक्कुटमूषकमण्डूकादेरन्तरा गमने नक्तं तावदध्ययनविरामश्च। गवाश्वमहिषादिपशुस्त्रीशूद्राद्यन्तरा गमने तूपवासः। मार्जारसर्पनकुलपञ्चमजात्यादेरन्तरा गमने त्रिरात्रमुपवासस्त्रिषवणस्नानं च। जानुभ्यां ग्रामान्तरगमनं वा। श्वपाकसृगालवानररजकादीनामन्तरा गमने कायम्। खरवराहोष्ट्रादिचाण्डालसूतिकोदक्याशवादेरन्तरा गमने कायत्रयम्। गौरगवयाजादिब्रह्मोक्तनास्तिकादेरन्तरा गमने त्रैमासिकम्। शशमेषश्वपाकादिगमने षाण्मासिकम्। गजगण्डसारव्याघ्रमहापातकिकृतघ्नादिगमने कृच्छ्राब्दं तावत्प्रायश्चित्तकालमनध्ययनं च। अमत्या सर्वत्रार्धम्। केचिदन्तरा गमने सर्वत्र तदानीमेवाध्ययनविरामे प्रायश्चित्तं नेत्याहुः। इत्ययाज्ययाजनादिप्रायश्चित्तानि॥

अथ पितृमातृसुतत्यागप्रायश्चित्तम्—अपतितानां पितृमातृगुरूणां गृहान्निष्काशनं हि सः। तत्र मत्या तत्कर्तुश्चान्द्रादिष्वेकं त्रैमासिकं वा

जातिशक्तिगुणाभ्यासादिकापेक्षया योज्यम् । मत्याऽभ्यासे मासं षष्ठान्नकालता मासं संहिताजपो वाऽधिकः । भार्यासुतत्यागेऽप्येवम् । मातुस्तु सर्वदोषेऽप्यत्याज्यत्वैव । सर्वथा रक्षणीयत्वात् । इति पित्रादित्यागप्रायश्चित्तानि ॥

अनन्तरं तडागारामविक्रय इत्युपपातकं पठितं तत्प्रायश्चित्तं तु सुतविक्रयप्रसङ्ग उक्तं वेदितव्यम् ।

अथ कन्यादूषणादिप्रायश्चित्तम्—तच्चाङ्गुल्यादिना तस्याः क्षतयोनित्वकरणं मिथ्यातद्दोषख्यापनं च । तत्र सवर्णानां कन्यादूषणे चान्द्रं त्रैमासिकं वा । आनुलोम्येनासवर्णकन्यादूषणे मासं पयःपानं कार्यं वा । प्रातिलोम्ये तु क्षत्रियवैश्ययोः कृच्छ्राब्दं ग्रीष्मवर्षाहेमन्तेषु क्रमेणाऽऽतपाभ्रावकाशजलाशयपूर्वकं मासं गोमूत्रयावकपानं वा । शूद्रस्य तु विप्रादिकन्यादूषणे वध एव । अत्यन्ताभ्यासे सवर्णस्यापि कृच्छ्राब्दम् । सोमविक्रयी वृषलीपतिः कौमारदारत्यागी शूद्रयाजको गुरोः प्रतिहन्ता सुराभिन्नमद्यपो ब्राह्मणवृत्तिघ्नः कूटव्यवहारी मित्रध्रुक्शरणागतघाती प्रतिरूपवृत्तिश्चैतेऽमत्या प्रवृत्तास्त्रैमासिकं व्रतं कुर्युः । मत्या षाण्मासिकम् । अभ्यासे कृच्छ्राब्दम् । इति कन्यादूषणादिप्रायश्चित्तानि ॥

अथ क्रमप्राप्तपरिवेदकयाजनादिप्रायश्चित्तम्—परिवेदकयाजने तस्मै कन्यादाने गुरौ कौटिल्य आत्मार्थपाकारम्भे च मद्यपायाः स्वस्त्रिया अप्युपभोगरूपे मद्यपस्त्रीनिषेवणे देवताराधनाद्यर्थगृहीतव्रतलोपेऽन्यस्मिन्व्रतलोपे चैतेषूपपातकेषु चान्द्रादिष्वेकं त्रैमासिकं वा । इति परिवेदकयाजनादिप्रायश्चित्तानि ॥

अथ स्वाध्यायाग्निसुतत्यागप्रायश्चित्तम्—तत्रात्यन्तापदि स्वल्पकालमधीतवेदत्यागे कायम् । अधिककालेऽतिकृच्छ्रम् । ततोऽप्यधिके पराकः । मासोत्तरं वेदत्यागे चान्द्रम् । यदा तु धनार्जनाद्यासक्ततयाऽसच्छास्त्राभ्यासकुटुम्बलालनाद्याकुलतया चिरकालं वेदं त्यजति तदा चान्द्रादिष्वेकं त्रैमासिकं वा । नास्तिक्याद्व्यसनासक्त्या वा वेदत्यागो ब्रह्महत्यासमः । तथा नास्तिक्यादग्नित्यागे मासद्वये जाते कायं कृत्वा पुनःसंधानम् । मासचतुष्टयेऽतिकृच्छ्रः । षण्मासत्यागे पराकः ।

तदूर्ध्वं चान्द्रादिष्वेकम् । संवत्सरादूर्ध्वं त्रैमासिकं द्वैमासिकं वा । यदा त्वालस्यादिना त्यजति तदा द्वादशाहातिक्रमे त्रय उपवासाः । मासातिक्रमे द्वादश । वत्सरातिक्रमे मासोपवासो मासं पयोभक्षणं वा । प्रमादादिना तत्त्यागे त्वा त्रिरात्राद्द्वादश प्राणायामाः । आ षड्रात्राच्चतुर्विंशतिः । आ द्वादशरात्रात्पञ्चाशत् । आ विंशतिरात्राच्छतं प्राणायामाः । आ त्रिंशद्रात्रादुपवासः । आ षष्टिरात्रात्त्रिरात्रम् । आ संवत्सरात्कायम् । अतः परं प्रत्यब्दं कायम् । सर्वत्र यावत्कालमहोमी तावद्द्रव्यं तण्डुलादि देयम् । प्रमादभिन्नविषये तु संवत्सरादूर्ध्वमग्नित्यागे चान्द्रम् । द्विवर्षे त्यागे चान्द्रं सोमायनं च चान्द्रद्वयं वा । त्रिवर्षोर्ध्वं संवत्सरं कृच्छ्राचरणं गोदानं च कृत्वा पुनराधानम् । संस्काराद्यकरणरूपे विभवे सत्यरक्षणरूपे च सुतत्यागे चान्द्रादिष्वेकम् । इति स्वाध्यायाग्निसुतत्यागप्रायश्चित्तानि ॥

पातित्यादित्यागकारणाभावेऽपि पितृव्यमातुलादिरूपबान्धवैः सह संभाषणसहभोजनादिवर्जनरूपे शक्तौ सत्यां पालनाद्यकरणरूपे च बान्धवत्यागे, भार्यायाः वेश्यात्वकरणेन जीवनरूपे स्त्रीधनोपजीवनकरणे च स्त्रिया जीवने, हिंसया जीवने वश्याद्यर्थौषधीभिर्जीवने जालबडिशादिविधानरूपे तिलेक्ष्वादिपीडनयन्त्रप्रवर्तनरूपे च हिंस्रयन्त्रप्रवर्तने मृगयाद्यूताद्यष्टादशव्यसनेषु च चान्द्रादिष्वेकं त्रैमासिकं वा । अत्यन्ताभ्यासे द्यूते मृगयायां च पाश्चवार्षिकव्रतम् । अनृतवादी तस्करो राजभृत्यो वृक्षारोपणवृत्तिर्गरदोऽग्निदो हयगजरथारोहणजीवी रङ्गोपजीवी श्वगणिकः शूद्राध्यापको वृषलीपतिर्भाण्डीकः श्ववृत्तिर्ब्रह्मजीवी नक्षत्रोपजीवी चिकित्सको देवलको राजपुरोहितः कितवो मद्यपः कूटकारकोऽपत्यनरपशुविक्रेता पाखण्डयागभोज्यान्नाशी चेत्येते ब्राह्मण्यमिच्छन्तो लब्धद्रव्यं त्यक्त्वा त्रैमासिकं कुर्युः । बहुकालाभ्यासे संवत्सरं चतुर्थकालाहारः । तत्र श्वगणिकः श्वगणजीवी । भाण्डीकस्तूर्यादिजीवी बन्दी वा । श्ववृत्तिर्नीचसेवकः । ब्रह्मजीवी मूल्येन द्विजकर्मकर्ता । द्रव्यग्रहणेन परहास्यकरणरूपे दासीभवनरूपे वा ।

आत्मविक्रये शूद्रसेवारूपे शूद्रप्रेष्यत्वे हीनजातिषु मैत्रीरूपे हीनसख्ये च चान्द्रादिष्वेकं त्रैमासिकं वा । बहुकालं शूद्रसेवायां चतुर्थ-

काले मितभोजनत्रिकालस्नानाभ्यां त्रिवर्षेण शुद्धिः । समुद्रयाने ब्राह्मणन्यासहरणे सर्वपण्यैर्व्यवहारे भूम्यनृते च शूद्रसेवावत् । उत्तमजातिसख्यविघटन उपोष्य परदिने पयःपारणम् ।

अकृतसवर्णविवाहस्य हीनवर्णविवाहो हीनयोनिनिषेवणं साधारणस्त्रीसंज्ञकवेश्यादिसंभोगश्च । तत्राऽऽद्ये चान्द्रादिष्वेकं त्रैमासिकं वा । सकृदमतिपूर्वकवेश्यादिगमने प्राजापत्यम् । द्विरात्राभ्यासे कामतश्च सकृद्गमने सप्तरात्रं सघकुशोदकपानम् । मतिपूर्वकाभ्यासे चान्द्रम् । अत्यन्ताभ्यासे त्रैमासिकम् । रेतःसेकात्प्राङ्निवृत्तौ सचैलं स्नानं गोभ्य ओषधिभारदानं च । आजन्मात्यन्तानवच्छिन्नाभ्यासे गुरुतल्पवत् । अत्र प्रतिनिमित्तं नैमित्तिकस्य प्रायश्चित्तस्याऽऽवृत्तिर्नास्ति । किंतु मत्या गमनाभ्यासेऽहर्गुणवृद्धिर्मासादर्वाक् । ततो मासगुणवृद्धिर्यावदब्दम् । ततो द्विगुणा वृद्धिर्यावत्पापाचरणम् । अमत्या गमनाभ्यासे तु सकृत्कृते यत्प्रोक्तं तत्त्रिभिर्दिनैस्त्रिगुणम् । मासात्पञ्चगुणम् । षण्मासाद्दशगुणम् । अब्दात्पञ्चदशगुणम् । त्र्यब्दाद्विंशतिगुणम् । ततोऽप्येवं प्रकल्प्यम् । एवमुपपातकाभ्यासेऽनुक्तप्रकारविशेषे सर्वत्रोह्यम् । महापातकाभ्यासे तु सकृत्कृते यत्प्रोक्तं तद्द्वितीये द्विगुणम् । तृतीये त्रिगुणम् । चतुर्थे निष्कृतिर्नास्तीत्यादिकम् ।

अगृहीताश्रमित्वमनाश्रमित्वम् । वर्षपर्यन्तमाश्रमं विनाऽवस्थाने प्राजापत्यं कृत्वाऽऽश्रमस्वीकारः । द्वितीयेऽतिकृच्छ्रः । तृतीये कृच्छ्रातिकृच्छ्रम् अत ऊर्ध्वं चान्द्रादीत्यापादि । अनापादि तु प्रथमेऽब्दे चान्द्रादिष्वेकं त्रैमासिकं वा । ततो वर्षेषु द्वित्रिचतुर्गुणम् ।

परपाकरतिः परान्नपुष्टता । चार्वाकादिशास्त्राभ्यासोऽसच्छास्त्राधिगमनम् । स्वर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाऽधिकारित्वमाकराधिकारः । तेषु भार्याविक्रये च चान्द्रादिष्वेकं त्रैमासिकं वा । इति परान्नपुष्टतादिचतुरुपपातकप्रायश्चित्तानि ॥

अथासत्प्रतिग्रहप्रायश्चित्तानि—तत्र प्रतिग्रहस्यासत्त्वं चातिदुष्टचाण्डालादेः कर्मदुष्टपतितादेश्च दातृत्वे भवति । कुरुक्षेत्रादिदेशे ग्रहणादिकाले च भवति । स्वरूपतोऽपि सुरामद्यमेषीकृष्णाजिनकालपुरुषमृतशय्योभयतोमुख्यादेरसत्त्वम् । मद्यं वृक्षादिसंभवम् । धान्यसंभवा सुरा ।

तत्र निमित्तद्वयसमावेशो यथा पतितादेर्मेष्यादिप्रतिग्रहः । तत्र निमित्तद्वयसमावेशे ब्रह्मचर्यपूर्वं गोष्ठे वासः प्रत्यहं त्रिसहस्रगायत्रीजपपूर्वकं मासं पयोव्रतम् । अभ्यासे सदा जले वासः । षष्ठे काले पयःपानं मासमेवं कुर्यात् । त्रिचतुर्निमित्तसंनिपाते चैवम् । अन्ते विप्रभोजनमुभयत्र । यदैकमेव निमित्तं तदा चान्द्रं पवित्रेष्टिर्मृगारेष्टिर्मित्रविन्देष्टिर्गायत्र्या लक्षजपो वा । सर्वत्रानुक्तौ दातृदेशकालद्रव्येष्वदुष्टेषु द्वादशनिष्कप्रमाणद्रव्यप्रतिग्रहे कार्यम् । एवं सर्वत्र द्रव्यानुसारात्प्रायश्चित्तवृद्धिह्रासौ । दातृदेशद्रव्यकालेष्वन्यतरदोषे प्रायश्चित्तस्यैकैकगुणवृद्धिः । अल्पद्रव्याणां मणिवासोगवादीनामेकैकप्रतिग्रहे गायत्र्यष्टसहस्रजपः । ततोऽल्पत्वे भिक्षामात्रप्रतिग्रहे पुण्यमन्त्रानुच्चारयेत् । प्रायश्चित्तमिदं सर्वं सति द्रव्ये गृहीतद्रव्यत्यागोत्तरमेव । त्यागश्चाप्सु प्रक्षेपः । कस्मैचिद्दानं वा । एकतरनिमित्ते तु त्यागप्रायश्चित्तयोर्विकल्प इत्याहुः ।

षोडश महादानान्यप्यसत्प्रतिग्रहः । एकस्य महादानस्यानेकैः प्रतिग्रहे तु न दोषः । शस्त्रविषब्रह्मदण्डहयरत्नगजतिललोहानां मृतशय्यालंकारवस्त्रादीनां तिलधेन्वाश्च प्रतिग्रहोऽसत्प्रतिग्रहः । नवश्राद्धमासिकश्राद्धगजच्छायासु भोजनं तीर्थे प्रतिग्रहश्च तथा । विद्यातपोहीनेन प्रतिग्रहोऽप्युत्तमद्रव्यप्रतिग्रहोऽपि चासत्प्रतिग्रहः । उत्तमत्वं च मूल्यतो वचनाच्च । देवविप्रराज्ञां द्रव्यमुत्तमद्रव्यं गोभूसरस्वत्यश्च । छान्दोग्ये त्वन्नदधिमधुत्रा(तृ)णगोभूरुक्माश्वगजा उत्तमा इत्युक्तम् । देवलो रत्नक्षेत्रवेश्महेमकुप्याभरणानि चेत्याह । मृतशय्याप्रतिग्रहे पुनःसंस्कारोऽप्यधिकः । एवं समुत्कर्षानृते गुरोरलीकनिर्बन्धे गुरौ व्यभिचाराद्यभिशापे ज्ञानतः कृते मासं पयसा वर्तनम् । एतदेवाशुचिद्रव्यस्याग्नावम्भसि च त्यागे । अमत्या कृच्छ्रम् । गुरुविषये तु गुरुं प्रसाद्य कृच्छ्रस्नानाभ्यां शुद्धिः । एतानि स्मृत्यन्तरोक्तोपपातकानि प्रासङ्गिकानि । इत्यसत्प्रतिग्रहप्रायश्चित्तानि ॥

अथ निन्दितान्नभक्षणप्रायश्चित्तम्—तत्रान्नमदनीयमात्रम् । तस्य निन्दितत्वं च स्वभावकालसंपर्कक्रियाभावपरिग्रहैः । तत्र स्वभावाल्लशुनादेः । कालतः पर्युषितादेः । संपर्काच्छ्वस्पृष्टादेः । क्रियातो हस्तदानादिना व्यञ्जनादेः । भावादिक्षुरसादेः । भवति

हि कस्यचिदिक्षुरसे भाव्यो मदिरेयमिति । परिग्रहात्पतितान्नादेः । तत्र स्वभावदुष्टलशुनगृञ्जनच्छत्राकविड्वराहग्रामकुक्कुटपलाण्डूनां प्रत्येकममत्या सकृद्भक्षणे सांतपनम् । अभ्यासे यतिचान्द्रायणम् । मत्या सकृच्चेचान्द्रम् । अभ्यासे तदावृत्तिः । अत्यन्ताभ्यासे सुरापानसमं प्रायश्चित्तम् । अन्ते पुनरुपनयनमेतेषु सर्वत्र । पुनरुपनयने च स्वाध्यायादिकालापेक्षावपनमेखलादण्डभैक्ष्यचर्यादीनि च । अत्र गृञ्जनं विषदिग्धबाणहतमृगमांसमिति कश्चित् । कलञ्जमिति तन्नामेति च प्राञ्चः । गृञ्जनं लशुनतुल्यः कन्द इति मिताक्षरा । गाजराख्यं मूलं यदीयं पत्रं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति विटाश्च मदार्थं स पत्रविशेषश्चेति माधवः । चरकादिवैद्यकोक्तपलाण्डवान्तरभेदेषु च्छत्राकादिभेदे कवकादौ च नरगोमांसादौ चैवमेव योज्यम् । एतेषां मुखप्रवेशमात्रे बलात्कारेण भक्षणे चानुपनीतबालेन सकृद्भक्षणे च गायत्र्या अष्टाधिकसहस्रेण मूर्धनि संततबिन्दुपातेनोपवासेन च शुद्धिः । इतरौषधानाश्यव्याधियुक्तस्यैतद्भक्षणे दोषो न । अत्रापि पूर्वोक्तसंततजलाभिषेक उपवासश्चेति स्मृत्यर्थसारे । सर्वत्र तत्कालच्छर्दितेऽर्धप्रायश्चित्तम् । गन्धवर्णरसैर्लशुनादितुल्यस्य भक्षणे सांतपनम् । यतिव्रतिब्रह्मचारिणां तप्तकृच्छ्रादि । लट्वाख्यं पक्षिणं कुसुम्भं वार्ताककुम्भीतकश्लेष्मातकफलानि कवाककृष्णसर्षपतण्डुलीयकनालीकानालिकेरीखुखण्डाख्यशाकानि कालिन्दं वर्तुलालाबुं च भक्षयित्वाऽरण्यकण्टकिकुसुम्भरक्तशिग्रुभूस्तृणकोविदारेषु क्षुद्रश्वेतकण्टकीवृन्ताकेषु राजसर्षपाख्यशाकोदुम्बरपूतिकाखड्वा(ण्डा)ख्यशणपुष्पशाल्मलेषु भक्षितेष्वन्येषु च कटुदुर्गन्धिकन्दमूलफलादिषु भक्ष्याभक्ष्यत्वेन संदिग्धेषु व्रश्चनप्रभवलोहितवृक्षानिर्यासादिषु रेतोविण्मूत्रेषु करनिर्मथितदधि बहिर्वेदि वा ऋत्विजैश्च पुरोडाशेषु भक्षितेषु चामत्या सकृच्चेदुपवासः । आवृत्तिरभ्यासे । मत्या सकृच्च त्रिरात्रम् । कामतोऽभ्यासे प्राजापत्यम् । अत्यन्ताभ्यासे तप्तकृच्छ्रः पुनरुपनयनं च । अन्यथा पतेत् । नील्यास्त्वमत्या सकृद्भक्षणे विप्रस्य चान्द्रम् । अभ्यासे मत्या सकृच्चाभ्यासे चाऽऽवृत्तिः । अत्यन्ताभ्यासे सांतपनम् । संधिनीयमसूस्यन्दिनीमृतवत्सानिर्दशामेध्यसेविन्यल्पवत्सानां गवामनिर्दशाजामाहिष्योरेकशफानां च महिषीवर्जितारण्यमृगाणां चाजावर्जितसर्वद्विस्तनीनां

च क्षीरेषु दधितत्संभवभिन्नशुक्तेषु चामत्या पीतेषु तेषां मत्या पानोत्तरं समनन्तरमेव च्छर्दने चैक उपवासः । मत्या त्रिरात्रम् । अमत्याऽभ्यासे च त्रिरात्रम् । ज्ञानतो द्वित्रि(स्त्रि)रभ्यासे छर्दने च पक्षं गोमूत्रयावकपानम् । अत्यन्ताभ्यासे मासं तत् । संधिनी वृषभेणोपजिगमिषुः । स्यन्दिनी स्रवत्क्षीरा । अविखरोष्ट्रनारीवानरविड्वराहश्वापदक्षीरेष्वमत्या सांतपनम् । मत्या तप्तकृच्छ्रः । अभ्यासे चान्द्रं पुनरुपनयनं च । अत्यन्ताभ्यासे सांतपनम् ।

स्त्रियाः क्षीरं द्विजः पीत्वा कथंचित्काममोहितः ।
पुनः संस्कृत्य चाऽऽत्मानं प्राजापत्येन शुध्यति ॥

ब्रह्मचारियत्योः कृच्छ्रस्तप्तकृच्छ्रो वा । शुक्तेषु दधि तद्विकारश्च भोज्यः । शूद्रस्य कपिलाक्षीरपानेन नवाब्दं ब्रह्महव्रतम् । विप्रस्यापि हुतशेषातिरिक्ततत्पाने पशुत्वप्राप्तिः । सर्पसरीसृपमूषकमार्जारकृकलासकर्कटनकुलमण्डूकशृङ्गिमयूरवानरकपिश्वगोमायुवृकसिंहव्याघ्रादिक्रव्यादजन्तुगजाश्वोष्ट्रखरैकशफानामुभयतोदन्तानां च काकबकबलाकाहंसगृध्रजालपादचक्रवाकाविष्किरपुण्डरीककपिञ्जलभासचाषकुक्कुटप्लवचक्रवाककारण्डवगृहचटककपोतपारावतखञ्जनपाण्डूकशुकसारिकासारसटिट्टिभोलूकश्येनकङ्करक्तपादतित्तिरिकोकिलहारीतग्द्गुकलविङ्ककौश्वदार्वाघाटादीनां मनुष्याणां जलचरजलपक्षिणां प्राणिभक्षकाणां नखैर्विदार्यान्नादिभक्षिणां मत्स्यादिजन्तूनां मत्स्यानां च सूनागतमांसभक्षणे शुष्कमांसभक्षणे च शशकशल्लककच्छपगोधाखड्गव्यतिरिक्तपञ्चनखमांसभक्षणे चैतेषां विण्मूत्ररक्तवसामज्ज्ञानां तदुच्छिष्टानां च भक्षणे चामत्या कायम् । अभ्यासे महासांतपनम् । मत्या तप्तकृच्छ्रः । मत्याऽभ्यासे चान्द्रम् । अत्यन्ताभ्यासे पतनम् । तेषां कर्णादिमलषट्कभक्षणेऽर्धमिति स्मृत्यर्थसारे । अमत्या सकृद्भक्षण एकोपवासः । कामतो द्विगुणम् । तथाऽभ्यासे त्रिरात्रसप्तरात्रद्वादशरात्रपक्षव्रतमासव्रतचान्द्रायणान्यभ्यासाधिक्यतारतम्यमालोच्य योज्यानि । अभ्यासे सर्वत्र व्रतान्त एकदिनं घृतप्राशनं पुनःसंस्कारश्च । समुदितभक्षणाभ्यासे षाण्मासिकं संवत्सरं चेति प्राञ्चः । एषां ज्ञानतो भक्षणोद्गिरणे तु सांतपनम् । अज्ञानतः प्राजापत्यम् । अकामतोऽभ्यासे चान्द्रम् । कामतोऽभ्यासे षण्मा-

सम्। अत्यन्ताभ्यासे सांवत्सरमिति मिताक्षरा। एषां केशनखमाशनेऽजाविमहिषीमृगाणां मांसभक्षणे मृच्छोष्टभक्षणे वाऽमत्यैक उपवासः। मत्या त्रिरात्रम्। एवं कीटपतंगकृमिजलचरास्थिरक्तभक्षणे रक्तवमने चापीति स्मृत्यर्थसारे। मांसभाण्डे पक्कस्यान्नस्याशने त्र्यहं कुशपक्कपयःपानम्। व्रतिनः केशादेर्मुखप्रवेशमात्रे तप्तघृतं ब्राह्मीरसं वा पिबेत्। केशादिभक्षणे तु सद्यः कुशहिरण्योदकसहितघृतप्राशनम्। ज्ञानतोऽभ्यासे त्रिरात्रोपवासो घृतप्राशनं च। ब्रह्मचार्यादेर्मधुमांसादिभक्षणेऽधिकं त्रिरात्रं कार्यं कायं वा पुनरुपनयनं च। ततो व्रतसमापनम्। अज्ञानतः सकृद्गोमांसभक्षणे कायम्। ज्ञानतो द्विगुणम्। अज्ञानतोऽभ्यासे चान्द्रम्। समुद्रगानदीतीरेऽनडुत्सहितगौश्च दक्षिणा। ज्ञानतोऽभ्यासे संवत्सरम्। अत्यन्ताभ्यासे पातित्यम्। कपिखरविड्वराहादिरेतोविण्मूत्रपुरीषाणामन्यतमभक्षणेऽन्येषां चामेध्यानामेतद्भक्षणे चान्द्रम्। अज्ञानतस्तप्तकृच्छ्रम्। अभ्यासादावधिकं कल्प्यम्। पुनरुपनयनं सर्वत्र। बलाद्गोमूत्रादिपाने प्राजापत्यम्। ऊनैकादशवर्षस्याप्येतदेव। गोमूत्रपुरीषं मेध्यम्। इति निन्दितान्नादिभक्षणप्रायश्चित्तम्॥

अथोच्छिष्टाद्यभक्ष्यभक्षणे प्रायश्चित्तम्—तत्र काकादिपक्षिश्वापदाखुबिडालनकुलोच्छिष्टे भूयस्यन्ने रसे च केशाद्यवपन्ने देवद्रोण्यादौ द्रव्यशुद्धिरहिते चान्नेऽमत्या भक्षित एकाहं ब्राह्मीसुवर्चलापानम्। मत्या चेत्त्रिरात्रम्। माधवीये तु तिलदर्भोदकैः प्रोक्षणमकृत्वा भोजन एतत्। मार्जाराद्युच्छिष्टस्य तथा प्रोक्षणैः शुद्धिस्मरणादित्युक्तम्। अल्पद्रव्यं चेदमत्याऽभ्यासे कृच्छ्रं मत्याऽभ्यासे पक्षं यावकव्रतम्। व्रतस्थस्य ब्रह्मक्षत्रियवैश्यशूद्रोच्छिष्टे तु विप्र एकत्रिपञ्चसप्तरात्राणि क्रमेण पञ्चगव्यं पिबेत्। अभ्यासेऽप्येषामावृत्तिः। मत्या भोजने त्वेतान्येव सोपवासानि कुर्यात्। मत्याऽभ्यासे कृच्छ्रातिकृच्छ्रतप्तकृच्छ्रचान्द्राणि। क्षत्रादौ पादपादहानिः। अन्यस्य विप्रोच्छिष्टभोजने सकृदज्ञानतः कृते महाव्याहृतिभिर्मन्त्रितपयःपानम्। ज्ञानतस्तदभ्यासादौ सांतपनम्। उच्छिष्टं चात्रैकपङ्क्त्युपविष्टविप्रादीनां भोजनमध्य एकेनापि पात्रत्यागे शेषमन्नं शूद्रादिविषये तद्भोजनोत्तरं पाकपात्रेऽवशिष्टमप्युच्छिष्टम्। एवंविधशूद्रोच्छिष्टभोजने त्रिरात्रोपवा-

सोऽघमर्षणजपः । कामतस्त्वेतद्विषये पञ्चरात्रं सप्तरात्रमुपवासश्चान्द्रं वाऽभ्यासादितारतम्येन योज्यम् । गुरुभिन्नविप्रोच्छिष्टभोजने श्वोपहत-भोजने कृच्छ्रम् । भोजनपात्रे भुक्तशेषमत्रोच्छिष्टम् । श्वशूद्रभुक्तशेषभोजन-पात्रेऽवशिष्टं कामतो भुक्त्वा तप्तकृच्छ्रं कार्यम् । अकामतः प्राजापत्यम् । अभ्यासे पराकं चान्द्रत्रयं वा । अपत्यभुक्तशेषभक्षणे चान्द्रम् । क्षत्रि-यवैश्यगर्दभादिभुक्तशेषस्य पात्रावशिष्टस्य भोजने पादोनकृच्छ्रम् । सार्द्धं कृच्छ्रत्रयादि(यमिति) केचित् । भाण्डस्थेऽन्ने केशपिपीलिकामेध्यसेवि-कीटैरुपहतं तावन्मात्रमुद्धृत्य मृद्भस्मताम्रवैडूर्यहिरण्यरजतादिभिर्गोवा-लदर्भयुक्तवारिणा शेषं प्रोक्षयेत् । हस्तस्थितमेवंभूतं त्यजेत् । मुखस्थं निष्ठीव्य घृतं प्राशयेत् । श्वचाण्डालरजस्वलासूतिकापतितादिदृष्टान्नमपि मृद्भस्महेमाम्बुभिः प्रोक्षयेदिति मयूखे स्मृतिः । मनुष्यरेतोविण्मूत्रभक्षणे वर्णाः क्रमेण तप्तकृच्छ्रातिकृच्छ्रकायत्रिरात्राणि कुर्युः । मत्या चान्द्रत-प्तकृच्छ्रातिकृच्छ्रकायानि पुनःसंस्कारश्चोभयत्र । अन्त्यजानां भुक्तशे-षस्य पाकपात्रावशिष्टस्य भक्षणे वर्णक्रमेण चान्द्रमहासांतपनषड्रात्रत्रि-रात्राणि । अभ्यासे द्विगुणम् । निरन्तरे पतने भोजनपात्रावशिष्टतदु-च्छिष्टभोजने द्विगुणम् । सहभोजने त्रिगुणम् । अत्र पुनःसंस्कारो युक्तः । मत्याऽभ्यासे पतनम् । कानिचिदुच्छिष्टभोजनप्रायश्चित्तानि प्रकीर्ण-क्रमसङ्गे दर्शितानि । इत्युच्छिष्टाद्यभक्ष्यभक्षणे प्रायश्चित्तम् ॥

अथाशुचिद्रव्यस्पृष्टाभक्ष्यभक्षणे प्रायश्चित्तम्—तत्र केशकीटनी-लीलाक्षास्थिस्नायुचर्मरुधिरविण्मूत्रमांसवसामज्जाशुक्रसुरास्पृष्टस्य महा-पातकिदृष्टस्य दुष्टपक्ष्यवलीढस्य विड्वराहाद्युच्छिष्टस्य गवाघ्रातस्य शुष्कपर्युषितयोश्च वृथापकस्य दैवपित्र्यान्नस्य होमार्थहविषो चाशने पाने चामत्या चेदुपवासः । मत्या कृच्छ्रपादोऽल्पसंसर्गे, महासंसर्गे त्वर्धकृच्छ्रः । तत्रापि संस्पृष्टामेध्यादे रसोपलब्धौ तप्तकृच्छ्रः । अवि-ज्ञातजात्यस्थ्यादिदूषिते कर्णादिमलषट्कदूषिते चार्धम् । जलपानसमये मुखनिःसृतं जलं यदि भोजनभाजने पतेत्तदा तद्भाजनान्नभोजने चान्द्रम् । इदं ज्ञानतोऽत्यन्ताभ्यासे । अकामतोऽभ्यासे सकृत्कामकृते च त्रिरात्रम् । सुराभिन्नगौडीमाध्वीमद्यवासितशुष्कभाण्डस्थोदकस्याज्ञानतः सकृत्पाने छर्दने च त्र्यहं कुशमूलादिपक्कक्षीरपानम् । तदभ्यासे चैत-

देव षड्रात्रम् । ज्ञानतस्तु पञ्चाहं शङ्खपुष्पीपक्वपयःपानम् । तथाऽभ्यासे सप्तस(रा)त्रं गोमूत्रयावकपानम् । अत्यन्ताभ्यासे द्वादशाहं ब्राह्मीपक्वपयःपानं प्रत्यहमष्टसहस्रगायत्रीजपश्च । अच्छर्दनेन जीर्णत्व एतदेव तत्र तत्र द्विगुणम् । एवं भाण्डस्याऽऽर्द्रत्वेऽपि तालादिमद्यभाण्डस्थोदकपान एतदर्धम् । शुष्कसुराभाण्डस्थोदकपान एक उपवासः । परेऽह्नि घृतप्राशनमात्रम् । तादृशभाण्डस्थपर्युषितजलपाने छर्दने च त्र्यहं शङ्खपुष्पीपक्वक्षीरपानम् । अकामतो द्विस्त्रिरभ्यासे पञ्चरात्रं तत् । कामतः सकृत्पाने सप्तरात्रम् । तथाऽभ्यासे पक्षम् । अत्र सर्वत्र जलपानस्य तपस्त्वाज्जलमल्पं पेयमित्याहुः । जीर्णत्व आर्द्रभाण्डस्थजलस्य पीतस्य वमने च प्राग्वत् । आर्द्रभाण्डस्थोदकपाने जीर्णे चान्द्रं कामतः । अकामतः षडुपवासाः । अभोज्यान्नभाण्डस्थितजलदुग्धदधिपाने ब्रह्मकूर्चः । शूद्रस्यात्र सर्वत्र विषये किंचिद्दानमेव । अन्तःस्थितास्थिचर्ममूत्रपञ्चनखखरविड्वराहादियुक्तात्यन्तोपहतकूपादिजलपाने षडुपवासाः । अतिकृच्छ्रो वा । व्रतान्ते पञ्चगव्याशनं च । अक्लिन्न उपवासत्रयं पञ्चगव्यं चान्ते । शूद्राणां नक्तम् । इदं ज्ञानतोऽभ्यासे । अकामतोऽर्धम् । प्राञ्चस्त्वकामतः प्रागुक्तं कामतस्तु द्विगुणमित्याहुः । तादृङ्मनुष्यपशुयुक्तकूपादिजलपाने त्वज्ञानतः सकृच्च षडुपवासाः । कामतोऽभ्यासे च पराकः । मत्याऽभ्यासे तप्तकृच्छ्रः । अधिकतराभ्यासे चान्द्रम् । तादृशस्थूलतडागादिजलपाने तु न्यूनं कल्प्यम् । विण्मूत्रास्थ्यादिदूषितकूपादिजलपाने त्रय उपवासाः । तादृशकुम्भस्थजलपाने सांतपनम् । इदमज्ञानतः । कामस्तु द्विगुणम् । पूर्वोक्तकूपादौ पानव्यतिरेकेण स्नानमात्रे त्वेक उपवासस्त्रिषवणस्नानं गायत्रीजपश्च । चाण्डालादिखाततडागादिषु जानुदघ्नादल्पपरिमाणजलेषु तथाविधजलासु चाण्डालादिकसंपर्कयुतह्रदपुष्करिणीषु चाकामतो जलपाने नक्तम् । कामत एक उपवासः । अन्यखातितचाण्डालादिपरिगृहीततादृशकूपादिजलपान एतदर्धम् । अभ्यासे कृच्छ्रम् । कामतोऽभ्यासे द्विगुणम् । जानुदघ्नह्रदपुष्करिण्यादिषु महाजलाशये च न दोषः । तादृशकूपे तु विप्रस्य महासांतपनम् । क्षत्रियादीनां कृच्छ्रकृच्छ्रार्धपादाः । अमत्याऽर्धम् । अशक्तः पञ्चगव्यं पिबेत् । चाण्डालादिभाण्डस्थजलपाने कूपवत् । चाण्डालादेः कूपभाण्डादिजलस्य पानोत्तरं वमने विप्रस्य कृच्छ्रम् । रजकाद्यन्त्यजखात-

कूपभाण्डादिजलतद्भाण्डस्थपयोदध्यादिपाने त्वमत्या द्विजाः क्रमेण ब्रह्मकूर्चपानेन त्रिद्व्येकोपवासान्कुर्युः । शूद्रस्तूपवासं शक्त्या दानं च कुर्यात् । मत्या सर्वत्र द्विगुणम् । अन्त्यजखातवापीतडागादिष्वल्पजलेषु पानादिकरण एक उपवासः । मत्या द्विगुणम् । अमत्याऽभ्यासे कायम् । मध्यमजलेषु पञ्चगव्यम् । महत्सु न दोषः । अत्र सर्वत्र पुनःसंस्कार इति केचित् । शूद्रामेध्यसेविकीटादिस्पृष्टान्नभोजने त्वहोरात्रमभोजनम् । इत्यशुचिद्रव्यस्पृष्टाभक्ष्यभक्षणप्रायश्चित्तम् ॥

अथ चाण्डालाद्यन्नभोजने प्रायश्चित्तम्—तत्र ज्ञानतः सकृच्चाण्डालाद्यन्नभक्षणे चान्द्रम् । अज्ञानतस्तप्तकृच्छ्रः । एककाल एकप्रयत्नोपक्रमाणां ग्रासानामेकस्मिन्प्रयोगे भोजनं सकृद्भोजनम् । एवं पुनर्भोजनेऽभ्यासः । वारत्रयेऽत्यन्ताभ्यासः । एवं सर्वत्र बोध्यम् । भवदेवस्त्वज्ञानतः सकृद्भोजने तप्तकृच्छ्रम् । अभ्यासे चान्द्रायणम् । ज्ञानतो द्वैगुण्यमित्याह सिद्धान्नार्थम् । सक्तुजलादौ शुष्कान्ने [च] । आमान्ने तु तदर्धमात्रं बोध्यम् । बलात्सकृच्छुष्कतदन्नभोजन उपवासत्रयम् । बलात्सिद्धान्नभोजने पराकः । ज्ञानाभ्यासे चान्द्राभ्यासः । अज्ञानतोऽभ्यासे तप्तकृच्छ्राभ्यासः । चाण्डालादिपक्कान्नाशने सर्वत्र पुनरुपनयनम् । कामतश्चतुर्विंशतिवारं भोजने पातित्यम् । अज्ञानतस्तु तद्द्विगुणवारभोजने तत्र च द्वादशवार्षिकं प्रायश्चित्तम् । यवनम्लेच्छयावनानामन्नभोजनेऽप्येवम् । अत्र प्रायश्चित्तेन पापनाशेऽपि वचनान्न व्यवहार्यता । द्विजस्य ज्ञानात्स्वेच्छया चाण्डालयवनादीनां दासत्वाङ्गीकारे तु प्राजापत्यद्वयम् । पुंश्चल्यभिशस्तम्लेच्छचाण्डालादीनां बलादेकमासं दासतामापन्नो द्विजो बलात्कारितगोवधोच्छिष्टमार्जनोच्छिष्टभक्षणतत्स्त्रीसंगादिः प्राजापत्येन शुध्यति । आहिताग्निश्चान्द्रेण । संवत्सरोषितस्य प्राजापत्यं पराकश्च । शूद्रस्य संवत्सरावासे पक्षं यावकपानम् । मासं वासे कृच्छ्रपादः । मयूखे तु प्राजापत्यादिकं मासमात्रे । गोवधादौ तु प्रातिस्विकं तत्प्रायश्चित्तमकामकृते विहितं कार्यमित्युक्तम् । एवं वर्षपर्यन्तं प्रायश्चित्तकल्पना कार्या । चतुर्वर्षपर्यन्तमिति क्वचित् । अग्रे पातित्यात्प्रायश्चित्ताभावः । एतदेव ज्ञानाच्छूद्रादिदासत्वाङ्गीकारे । अज्ञानादर्धमित्याहुः । चाण्डालादिस्पृष्टान्नभोजने प्राजापत्यम् । ज्ञानतो द्विगुणम् । एतदेव पतितकुणिरजस्वलादिस्पृष्टान्नभोजने । अज्ञानतः सकृच्चाण्डालरज-

खलापतिताद्युच्छिष्टभोजने चान्द्रम् । तद्भोजनानन्तरं पाकपात्रेऽवशिष्टमन्नं तदुच्छिष्टम् । ज्ञानतो द्विगुणम् । चाण्डालादिभोजनपात्रावशिष्टरूपोच्छिष्टभक्षणे तु प्रकीर्णकप्रसङ्गोक्तं ज्ञेयम् । क्षत्रियवैश्ययोरापादि बलात्कारेऽन्नेतरचर्विततांबूलाद्युच्छिष्टभोजने च क्रमेण कार्यं कार्यार्धम्। विप्रस्य तत्रापि चान्द्रमेव । क्षत्रविशोरप्यापदभावेऽन्नरूपोच्छिष्टभोजने च चाद्रमेव । सर्वत्रानुच्छिष्टादुच्छिष्टे द्वैगुण्यम् । तत्रापि पाकपात्रावशिष्टोच्छिष्टाद्भोजनपात्रावशिष्टोच्छिष्टे द्विगुणमधिकं वा कल्प्यम् । तथा च तत्स्पृष्टमात्रात्तद्द्विगुणं तद्धस्तदत्तस्य तद्गृहपक्कस्य वा भक्षणे कल्प्यम् । सहभोजने त्रिगुणम् । उच्छिष्टे चतुर्गुणमित्यादि बोध्यम् । चाण्डालादिसंसर्गिणोऽन्नस्य तत्पाकस्य भोजने कृच्छ्रार्धम् । शुष्कादौ तदर्धादिचाण्डालादिस्पृष्टजलक्षीरदध्यादिपाने लघुसांतपनम् । एतत्पीतशेषाम्बुपाने षडुपवासपूर्वकं पञ्चगव्यपानमज्ञानतः । ज्ञानतो द्विगुणम् । अभ्यास आवृत्तिः । अज्ञानतः सकृच्छौण्डिकाद्यन्नभोजने मासं गोमूत्रयावकपानम् । शुष्कान्ने तदर्धं षडुपवासा वा । आमान्ने तदर्धम् । ज्ञानतो द्विगुणम् । अभ्यास आवृत्तिः । ज्ञानतोऽष्टधा भोजने कृच्छ्राब्दम् । अज्ञानतस्तथात्वे चान्द्रद्वयम् । ज्ञानादष्टचत्वारिंशद्वारं भोजने पातित्यम् । अज्ञानतः षण्णवतिवारं भोजने तत्र द्वादशाब्दम् । ज्ञानतः सकृदेतदुच्छिष्टान्नभोजने विप्रस्य चान्द्रम् । क्षत्रियवैश्ययोस्तप्तकृच्छ्रः । एतदर्धमेतत्स्पृष्टमात्रान्नभोजने । शुष्कान्नस्योच्छिष्टभोजनेऽप्येवम् । अत्राशक्तः—

कुशोदुम्बराबिल्वाद्यैः पनसाम्बुजपत्रकैः ।
शङ्खपुष्पीसुवर्चादिक्काथं पीत्वा तु शुध्यति ॥

तत्पीतशेषजलपान उपवासत्रयपूर्वकं पञ्चगव्यपानमज्ञानतः । ज्ञानतो द्विगुणम् । अभ्यास आवृत्तिः । गवोच्छिष्टाशने छर्दन एकउवासः पञ्चगव्यपानं च । अभ्यास उपवासत्रयम् । चतुर्थे पञ्चगव्यम् । अच्छर्दने ज्ञानतः सकृद्भोजनेऽप्येतदेव । मतिपूर्वकाभ्यासेऽतिकृच्छ्रः । केचिच्छ्वकाकोच्छिष्टे पुनःकृतपाकपर्युषितान्ने स्त्रीशूद्रोच्छिष्टे चान्ने भुक्तेऽप्येवमेव प्रायश्चित्तमाहुः । प्रपाजलपाने क्षीरवृक्षनिर्यासाधारपात्रस्थजलपाने नौकाजलनिःसारणीपात्रस्थजलपाने कूपादेश्चर्मपुटकनिःसा-

रितजलपाने च सचैलस्नानपूर्वकमुपवासः । अशक्तस्य पञ्चगव्यपानम् । आपादि तदेव जलं भूमिष्ठं कृत्वा पात्रान्तरेणोद्धृतं पेयम् । प्राणापादि दोषो न । शूद्रभाण्डजलपान उपोष्य बिल्वपत्रपलाशक्काथोदकपानम् । नवभाण्डे तु न दोषः । एवं पयोदध्यादावपि । अत्र सर्वत्र पुनरुक्तिः प्रासङ्गिकी । वैलक्षण्योक्तिः स्मृत्यन्तरानुरोधात् । तत्र शक्त्याद्यपेक्षया व्यवस्था ।

शातातपः—घृतं तैलं दधि क्षीरं तथैवेक्षुरसो गुडः ।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥

इति चाण्डालाद्यन्नभोजनप्रायश्चित्तम् ॥

अथ भावदुष्टादिभक्षणे प्रायश्चित्तम्—तत्र यद्वर्णत आकारतो वा विसदृशतया जुगुप्सितशरीरमलादिभावनां जनयत्यरिप्रयुक्तगरादिशङ्कां वा जनयति तद्भावदुष्टम् ।

क्षुधार्तश्च न को भुङ्क्ते मामकं त्वन्नमेव हि ।
ब्रूते व्यर्थाश्रयस्त्वेवं तद्वाग्दुष्टं [ प्रकीर्तितम् ] ॥

का क्रियाऽस्मिन्निति विनिन्द्य दीयते यत्तच्च । तयोर्भोजने कामतः कृते त्रिरात्रमुपवासः । गोमूत्रयावकपानमित्यन्ये । अज्ञानतोऽर्धम् । छर्दने घृतप्राशनम् । भक्ष्याभक्ष्यत्वेन शङ्कितवस्तुभक्षणेऽक्षारलवणम् । रूक्षां ब्राह्मीं सुवर्चलां पिबेत् । त्रिरात्रं शङ्खपुष्पीं वा पयसा सह । कुशपद्मोदुम्बरपलाशबिल्वपत्रक्काथं वा पिबेत् । शङ्कायाश्च विज्ञाने द्विगुणम् । अज्ञानतः शङ्कितभक्षणशुद्ध्यर्थं वर्षान्ते त्रीन्द्वावेकं वा कृच्छ्रान्कुर्यात् । इति भावदुष्टादिभक्षणप्रायश्चित्तम् ॥

अथ कालदुष्टाशने प्रायश्चित्तम्—कालदुष्टमस्नेहाक्तपर्युषितादि । मत्या तद्भक्षणे त्रिरात्रं यावकव्रतम् । अमत्या त्वेक उपवासः । अनिर्दशे गोक्षीरादिपाने चैवम् । यवगोधूमपयोदधिपिष्टविकारे स्नेहपक्के स्नेहाक्तान्नादौ च न दोषः । शृङ्गास्थिदन्तशुक्तिशङ्खकपर्दजनितपात्रैः कन्दशालूकजैश्च जलं पीत्वा नवोदकं च वर्षाकाले त्र्यहादर्वाक्, अकाले च दशाहादर्वाक्पीत्वा पञ्चगव्यं पिबेत् । मत्योपवासः । ग्रहणकाले नवश्राद्धे च भोजने ग्रामयाचकान्नभोजने च चान्द्रम् । ग्रहणनिमित्तनिषिद्धकाले संधिकालेऽतिप्रातरतिसायंकाले च भुक्त्वा रात्रौ धानादधिसक्तुतिलसंबद्धान्नभोजन एवमादिष्वनादिष्टप्रायश्चित्तेषु प्राणायामशतम् ।

मत्योपवासः । अमत्योपवास इत्यन्ये । इति कालदुष्टाशनप्रायश्चित्तम् ॥

अथ गुणदुष्टभोजने प्रायश्चित्तम्—शुक्तानि कषायादींश्चान्यान्यमेध्यानि चामत्या पीत्वा भुक्त्वा चोपवसेत् । मत्या त्रिरात्रं यावकम् । आमलकयुक्तकाञ्जिकायां न दोषोऽभिघारणे च । शुक्तं कालवशादम्लतां गतम् । उद्धृतसारपिण्याकमथितादिभक्षणे मत्या त्रिरात्रं यावकम् । अमत्याऽर्धम् । छर्दित्वा घृतं पिबेत् । वैश्वदेवादिरहितान्नभोजनेऽतिथिदेवतादिप्रयोजनमनुद्दिश्य वृथा पक्वस्य कृसरसंयावकपायसापूपशष्कुलीमधुमांसादिभक्षणेष्वमत्योपवासः । मत्या त्रिरात्रं यावकम् । कायमभ्यासे । आहिताग्निस्त्वमत्या त्रिरात्रम् । मत्या कायं कुर्यात् । हस्तदानादिक्रियादुष्टस्यामत्या भोजने नक्तम् । मत्या तूपवासः पञ्चगव्यं च । तत्र माक्षिकमिक्षुरसविशेषरूपं फाणितं शाकं गोरसलवणघृतानि चैतानि हस्तदत्तानि दुष्टानि । अमत्याऽभ्यासे तूपवासः । मत्याऽभ्यासे त्रिरात्रम् । अत्यन्ताभ्यासे सांतपनम् । इति गुणदुष्टभोजनप्रायश्चित्तम् ॥

अथ श्राद्धभोजने प्रायश्चित्तम्—तत्रान्तर्दशाहे नवश्राद्धानि । एकादशाहश्राद्धमारभ्योनाब्दान्तानि षोडशैकोद्दिष्टानि नवमिश्राणि । सपिण्डीकरणं मिश्रं, ततःपराणि पुराणानि । तत्र नवश्राद्धभोजने कायम् । अनापद्यत्र चान्द्रम् । एकादशाहे महैकोद्दिष्टेऽप्येवम् । पादोनं कायमापदि । अनापदि तु चान्द्रं कायं चेत्यन्ये । द्वादशाह आद्यमासिके चोनमासिके च पादोनं कायमेव । अत्रानापदि कायम् । अन्ये पराकमाहुः । द्वितीयमासिकं त्रैपक्षिकमासिक ऊनषण्मासिक ऊनाब्दे चार्धकृच्छ्रम् । अनापदि पादोनम् । त्रिमासाद्यब्दमोक्षान्तेषु सपिण्डने चाऽऽब्दिके चोपवासः पादकृच्छ्रो वा । अनापदि तु त्रिरात्रं कृच्छ्रार्धं वा । अन्ये त्वनापदि त्रैपक्षिकेऽतिकृच्छ्रः । षाण्मासिके कृच्छ्रः । आब्दिक आपदि त्रिरात्रं गोमूत्रयावकपानम् । अनापदि कायपादमित्याहुः । तदुत्तरं प्रत्याब्दिके त्रिवर्षपर्यन्तं नक्तम् । अनापदि तूपवासः । गुरुविभाद्यर्थकद्रव्यार्थं नवश्राद्धभोजने त्रिरात्रम् । महैकोद्दिष्टे द्वादशाहादौ च त्रिरात्रम् । द्वैमासिकादावुपवासः । त्रिमासादौ नक्तं पञ्चगव्यं च । प्रत्याब्दिकेऽन्यपुराणेषु च षट् प्राणायामाः तत्रैव निःस्पृहस्य भोक्तुर्जपशालिनो वा तदर्धम् ।

क्षत्रियादिश्राद्धेषु द्वित्रिचतुर्गुणानि क्रमात्कार्याणीति स्मृत्यर्थसारे। अन्यत्र तु पार्वणश्राद्धे षट् प्राणायामाः। त्रिमासादिवत्सरान्तमुपवासः। सपिण्डनश्राद्धे च। आद्यमासिके पादोनं कृच्छ्रम्। त्रैपक्षिके तदर्धम्। द्वैमासिके पञ्चगव्यपानम्। प्रत्यब्दं नक्तम्। इदमापदि। अनापदि तु द्विगुणमिति। चाण्डालोदकसर्पविप्रपशुदंष्ट्रिविद्युत्पातपतनविषोद्बन्धनानाशकैर्मृतानां स्तेनपतिताद्यभोज्यान्नानां च नवश्राद्धेषु चान्द्रम्। प्रथममासिके चान्द्रं पराकश्च। द्वादशाहादौ पराक एव। द्विमासत्रिपक्षादावतिकृच्छ्रः। त्रिमासादौ कायम्। आब्दिके पादकृच्छ्रः। द्वितीयवर्षादावुपवासः। सम्यग्विषयेऽपि द्रव्यार्थभोजनेऽप्येवमेव। अपाङ्क्तेयानामेकादशाहश्राद्धभोजने शिशुचान्द्रम्। यतिव्रतिब्रह्मचारिणां तु प्रथममासिकादिषु नवश्राद्धसूतकान्नस्य च भोजन उक्तं कृत्वाऽधिकत्रिरात्रोपवासं प्राणायामत्रयपूर्वकं घृतप्राशनं च कृत्वा व्रतशेषसमापनम्। अनापदि तु कार्यं त्रिरात्रोपवासो द्वादश प्राणायामाः पञ्चगव्याशनं चाधिकम्। कामतो भोजने पुनरुपनयनमित्यन्ये। अभ्यासे तूक्तकृच्छ्रादिद्विगुणम्। आमहेमसंकल्पितश्राद्धेषु तत्तदर्धानि। गुरुविषये तूपवासो नक्तं षट्त्रिंशत्प्राणायामाश्च। अश्रोत्रियादिपुराणश्राद्धेष्वनुक्तप्रायश्चित्तेषु सर्वश्राद्धेषु च गायत्र्या दशकृत्वोऽपः पीत्वा शुध्यति। ततः संध्योपासनहोमादि यथोचितं कुर्यात्। वृद्धिश्राद्धे प्राणायामत्रयम्। चौलनामकरणजातकर्माङ्गश्राद्धेषु चूडाहोमान्ते च सीमन्ते सोमे चाधानाङ्गब्रह्मौदने चामत्याऽऽपदि च भुक्तौ सांतपनम्। मत्याऽऽपदि चान्द्रम्। अन्यसंस्कारेषूपवासः। अनापदि त्रिरात्रम्। अन्यदत्ता कन्याऽन्यस्मै पुनर्दत्ता या सा पुनर्भूः। असंस्कृते पूर्वगर्भे प्रसूते सति द्वितीयगर्भे संस्कारो यस्याः सा पुनरेता। ऋत्वादिषोडशाहात्पश्चादेव या गर्भिणी सा रेतोधा। भर्तृशासनोल्लङ्घिनी कामचारिणी। आसां गर्भेषु भुक्तौ पूर्ववत्सांतपनं चान्द्रं वा। सर्वस्त्रीप्रथमगर्भेषु चैवम्। अनिर्दशाहनवश्राद्धे कामतो भुक्तवतो विप्रस्यानापदि संवत्सरपर्यन्तं भोजनात्प्राक्संहिताध्ययनमिति केचित्। इति श्राद्धभोजनप्रायश्चित्तम्॥

अथ परिग्रहाशुचिदुष्टभोजने प्रायश्चित्तानि—तत्र राजपुरोहितराजभृत्यवैश्यशूद्राणां क्लीबाजाविकमाहिषिकस्थानिकभूपालानां स्तेनगा-

श्कलक्षकवार्धुषिकदीक्षावस्थितानां कदर्यबद्धाभिशस्तपुंश्चलीदाम्भि-
कवैद्यनटनर्तकगणकानां भगवृत्तिस्त्रीसदृशचेष्टितनिराचारनिषिद्धाचा-
राणामाचार्याग्निगुरुधर्मशास्त्रगोब्राह्मणादिद्वेषिणां संवत्सराभ्यस्तो-
पपातकानां चर्मकारस्वर्णकारशौण्डिकव्याधपुनर्भूजातभ्रूणघ्नविषकारश-
स्त्रकारलोहकाराणां मत्तोन्मत्तक्रुद्धातुरगण[क]गणिकानां श्वचक्रमद्यस्त्री-
मृगजीविनामश्वरथगजारोहणवृत्तीनामुच्छिष्टभोजी(जि)क्रूरोग्रपतितपि-
शुनानां रजकनिर्णेजककैवर्तकानां शूद्रयाजकाध्यापकचित्रकारशिल्पिब्र-
ह्मविक्रयिणां वृथाश्रम्यनाश्रम्याश्रमभेदिनामपण्यविक्रेतृसोमलताविक्रेतृ-
शैलूषतन्तुवायतुन्नवायकिरातानां यतिब्रह्मचारिणोर्व्रात्ययाजकादीनां
नित्यरोगियोनिसंकीर्णसंकरजातिकुण्डगोलकतदन्नाशिनां घाण्टिकविप्रगो-
देववृत्तिघ्नानां परिदेवनसंबन्धिनां गरदसूपकारवैणवोपजीविपाखण्डिलि-
ङ्गिनां सूतादिप्रतिलोमजानां कर्मारघृतघ्नोग्रदण्डपातिनां पुण्यसोमयागा-
त्मविक्रयिणामनृतवादिद्वेषिदंभकारणां वृक्षारोपणवृत्तीनां कूटकृद्वृषली-
तत्पतितत्संबन्धिनां तूर्यादिस्वनव्यतिरिक्तकरणैर्नृपतिप्रबोधकानां कित-
वमृगयाजीविनिषादतत्कर्मकृतां मूल्येन द्विजकार्यकर्तॄणां प्राणिवधजीवि-
लोकायतिकदेवलकस्त्रीजितकुष्ठिकुनखिश्यावदन्तानां पित्रादिविवदमानस्य
नद्यादिसंतरणजीविग्रामयाजकतत्पुरोहितवणिजपशुमारकदुर्लोमसेवक-
काण्डपृष्ठानां पर्याहितपरीष्टपुनर्भ्वग्रेदिधिषूपतितज्जातानां चक्रितैलिकप-
क्षिरक्षकसमुद्रतारकहीनाङ्गातिरिक्ताङ्गानामपुत्रकानग्निकमुमूर्षूणां पतिपु-
त्ररहितस्त्रियाः पञ्चयज्ञानकृत्वा नित्यपरान्नभोजिविरूपपरपाकनिरतस्य
पञ्चमहायज्ञकरणं विना भोजनरूपपरपाकनिवृत्तस्यापञ्चसंज्ञकज्ञानवर्जि-
तगृहस्थस्याऽऽचार्यपितृमातृसुतगुर्वग्नित्यागिनां सुतकन्यास्त्रीसत्यविक्र-
यिणां गृहास्थितोपपत्तिरज्ञातोपपत्तिकस्त्रीपरिग्रहिणो द्यूतजीविविधिनिषे-
धातीतसूतकिकुलालानां चतुःषष्टिपलान्नभक्षकरूपकुण्डाशिनः कांस्य-
सीसादिकारवाद्योपजीविभाण्डवस्त्रादिकर्तृपश्वादिविक्रयिमहर्घविक्रयिणां
ताम्रादीनां स्वर्णादिसदृशरूपकर्तृणामित्यादिपापिनामेषां मार्गे तिष्ठतां
भिक्षान्नप्रतिग्रहे चान्द्रायणम् । एतेषामकृतनिष्कृतीनां मुख्यतस्तत्तद्वृ-
त्त्युपजीविनां चान्नभोजने दाने याजने प्रतिग्रहे चैवम् । एतच्च त[त्त]-
द्वृत्त्युपार्जितधनत्यागपूर्वकमेव । कुनखिकृष्णदन्तकुष्ठिप्रभृतीनां च प्रागु-
क्तानां विप्रान्नदशूद्रस्य शूद्रान्नदविप्रस्यास्वामिकशूद्रस्याप्रसूताया दुहि-

तुश्वान्नभोजने शिष्टजुगुप्सितान्नस्य महापापिवीक्षितस्य श्वादिस्पृष्टस्योदक्यादिदृष्टस्य गवाऽऽघ्रातस्य पक्ष्यवलीढस्यासंस्कृतस्य बहुयाचितस्य सरोषसविस्मयदत्तस्य पादस्पृष्टस्यावज्ञातस्यानर्चितदत्तस्यातुष्टिकरस्य चान्नस्य भोजने चामत्या त्रिरात्रम् । अमत्याऽभ्यासे कृच्छ्रः । मत्याऽतिकृच्छ्रः । मत्याऽभ्यासे तप्तकृच्छ्रः । ब्रह्मचर्यादेः कायातिकृच्छ्रतप्तकृच्छ्रचान्द्रायणानि मत्यादिषु क्रमेण पुनःसंस्कारश्च । यद्वा त्रिषणवद्वादशरात्राणि पयसा भूयोभ्यासे चान्द्रम् । अत्यन्ताभ्यासे चान्द्रवृद्धिः । आपद्येकद्वित्रिचतुरुपवासाः । अत्यन्तापदि त्रिषणवद्वादश प्राणायामाः । आमान्नेषु स्नानम् । एतद्वृत्तिविमान्नभोजन एकभक्तम् । अनाचारे दुष्टाचारे नक्तम् । ब्राह्मणब्रुवे स्नानमष्टशतजपश्च । एवं शाखारण्डान्नस्य ब्राह्मणादिसंघाताद्युपदेशत्यक्तादिरूपस्यानेकस्वामिकरूपस्य वा गणान्नस्य को भुङ्क्त इत्यादिस्मयादिना दीयमानदुष्टान्नस्य नगरमाधुकराद्यन्नस्यासन्मानं गुणिनां सन्मानं पापकर्मणां कुरुते यस्तदन्नस्य च भोजने प्राग्वदेव । आचारेन्दुशेखरे भोजनप्रकरणे गणिकाद्यभोज्यान्नभक्षणे चैवमित्युक्तम् । इति परिग्रहाशुचिदुष्टभोजनप्रायश्चित्तानि ॥

अथ जातमृताशौचान्नभोजने प्रायश्चित्तम्—द्विजाशौचे सवर्णानामुपवासस्त्रिरात्रं वा । विप्रक्षत्रियवैश्यशूद्राशौचेष्वमत्या विप्रो भुक्त्वा नक्तैकद्वित्रिरुपवासान्कुर्यात् । अभ्यासे त्वेकत्रिपञ्चसप्तोपवासाः । यद्वाऽभ्यासे द्वात्रिंशत्षष्टिशतं प्राणायामाः । उपवासैः प्राणायामानां समुच्चय इत्येके । अन्ये त्वापद्यज्ञानत एवासकृद्भोजन एवैतत् । अभ्यासे त्वधिकमित्याहुः । मत्या चेत्कायसांतपनमहासांतपनचान्द्राणि । एकद्वित्रिचतुःकायानि वा । मत्याऽभ्यासे कायातिकृच्छ्रतप्तकृच्छ्रचान्द्राणि । कामतो भूयोभ्यास एकद्वित्रिषण्मासेषु क्रमेण यावकव्रतम् । अत्यन्तापदि मत्याऽभ्यासेऽपि प्रागुक्तप्राणायामा एव । अज्ञानाद्भुक्तौ छर्दने चानापद्यप्यष्टाविंशतिपञ्चशताष्टसहस्रगायत्रीजपो वा बोध्यः । द्विजाशौचे शूद्रस्य भुक्तौ स्नानम् । शूद्राशौचे शूद्रस्य स्नानं पञ्चगव्यं च । आशौचिविप्रस्पृष्टपानीयपाने पञ्चगव्यमज्ञानतः । ज्ञानतश्चेदुपवासः । ब्रह्मचर्यादेस्तत्पाने पञ्चगव्यमुपवासश्च । मत्यहं सहस्रजपश्च त्रिरात्रम् । जाताशौच आहिताग्न्याशौचे च लघु सर्वं योज्यमित्येके । आशौचे भुक्तवन्तं न स्पृशेद्

पुरीषोत्सर्गात् । इदं च प्रायश्चित्तं तद्वर्णानामाशौचव्यपगमे कार्यम् । तावदाशौचान्नभोजिनोऽप्याशौचात् । एतच्चाऽऽशौचिस्वामिकान्नभोजन एव । आशौचिस्पृष्टाशौचिस्वामिकान्नभोजने तु तत्तत्प्रायश्चित्तद्वयसमुच्चय इत्यन्यत्र विस्तरः । आशौचिगृहेऽन्यदीयान्नभोजनेऽपि नक्तमुपवासो वा प्रायश्चित्तम् ।

अथ कापालिकान्नभोजने तज्जलपाने च क्रमात्कार्यं तदर्धं च । अभ्यासे द्विगुणम् । मत्याऽभ्यासे चतुर्गुणम् । तत्स्त्रीसंगमने चैवम् । अत्यन्ताभ्यासेऽब्दकृच्छ्रम् । अन्नसत्रप्रवृत्तस्याग्निहोत्रिणश्चाऽऽशौचवत्त्वेऽपि तदीयामान्नेषु दोषो न । तयोः पक्वान्नग्रहणे तु क्रमेणैकरात्रं यावकव्रतं द्वादश चतुर्विंशतिः प्राणायामा वा । पक्षे मासे वा देवपितॄन्भोजयतोऽन्नाशने चान्द्रम् । पतितगृहवासान्नभोजनप्रतिगृ(ग्र)हेषु ज्ञानाभ्यासे मासोपवासः । अज्ञानाभ्यासे चान्द्रम् । पूर्वगणितव्यतिरिक्तनिषिद्धाचरणशीलानामन्नभोजने तूपवासः । वत्सराभ्यासे, पराकः । उक्तातिरिक्तनिषिद्धमूलफलपत्राद्यशन उपवासः । इति जातमृताशौचान्नभोजने प्रायश्चित्तम् । इति निन्दितान्नादनप्रायश्चित्तानि ॥

अथ नटादिकर्मकरणे प्रायश्चित्तम्—वशीकरणोच्चाटनादिरूपेऽभिचारे शक्तौ सत्यामपालनरूपे विना कारणं गृहान्निष्काशने संभोगादित्यागरूपे च भार्यात्यागेऽप्युपपातकसामान्यप्रायश्चित्तानि शक्त्याद्यपेक्षया योज्यानि । अत्रोपपातकप्रायश्चित्तेषु यथोपदिष्टं विप्रस्यैव । क्षत्रियस्य पादोनम् । वैश्यस्यार्धम् । शूद्रस्य पादम् । तत्स्त्रीणां तदर्धम् । रजस्वलानां तत्र तत्रोक्तमेव कार्यम् । इति नटादिकर्मकरणे प्रायश्चित्तम् । इत्युपपातकप्रायश्चित्तानि समाप्तानि ॥

अथ महापातकेषु । तत्राऽऽदौ ब्रह्महत्याप्रायश्चित्तम्—तत्र ब्राह्मणत्वप्रकारकज्ञानपूर्वकं मारणकामनया ब्राह्मणवधे मरणादेव शुद्धिः । तच्चाऽऽत्मनोऽग्निप्रवेशनेन भृगुपतनेन वा । अथवा ब्रह्महत्यापापशुद्ध्यर्थं बाणलक्ष्यी( क्ष्यी )भूतोऽयमिति जानतां धनुर्भृतां युद्धभूमौ स्वेच्छया लक्ष्यभवनेन । अत्र तादृशो बहुप्रहारार्तो मृतकल्पो भवन्यादि पुनर्जीवेत्तदाऽपि शुध्यति । मरणान्तं प्रायश्चित्तं क्षत्रियादेरेव । विप्रस्य तु तत्तद्वक्ष्यमाणं प्रायश्चित्तं द्विगुणं कार्यमिति मिताक्षरा । अज्ञानतोऽनि-

च्छया वा कृते तु ब्रह्मवधे हतविप्रशवशिरोध्वजहस्तस्तत्कपालालाभे गृहीतान्यदीयकपालः स्वकर्म ख्यापयन्ब्रह्मचारिधर्मवांस्त्रैवर्णिकाचार्यादिदर्शने मार्गादपक्रामंस्त्रिषवणस्नाध्ययनाध्यापनादिषट्कर्माणि वर्जयन्सपन्त्रकं स्नानसंध्योपासनमात्रं कुर्वन्रात्रौ वीरासनी जटी मुण्डी वा वन्यफलमात्राहारी तदभावे त्वसंकल्पितविधूमभुक्तवज्जनसप्तागारेष्वेव भैक्ष्यं मृत्पात्रेण चरन्क्षमी दान्ताचारः कम्बलक्षौमशयानश्चीरवल्कलान्यतमवासा बहिर्ग्रामाद्देवालयादिसमीपवासी विप्रगृहाण्यप्रविशन्द्वारादेव तत्तद्गृहान्नमस्कुर्वन्नेककालाशी भिक्षाया अलाभ उपवसन्द्वादश वर्षाणि क्षपयेत् । ध्वजश्च शवशिर्हरणार्थखट्वाङ्गस्यैव । एतदशक्तौ षष्ट्युत्तरत्रिशतधेनवस्तन्मूल्यं वा हेमरौप्यान्यतरस्य षष्ट्युत्तरत्रिशतनिष्कानि (णि) । अत्राशक्तौ तावत्संख्यान्यर्धनिष्कानि(णि) पादनिष्कानि(णि) वा । अत्रान्ते शतं दश वा गावो दक्षिणा विप्रभोजनादीति केचित् । पितृमातृसोदरगुरुश्रोत्रियाहिताग्न्याचार्यादिविप्रवधे तु मरणपर्यन्तमेतदेव व्रतम् । भिक्षाशनं च लोहितशरावेणेति । अत्र गोसहस्रादिकद्वादशाब्दमित्यन्ये । द्वादशाब्दव्रतमध्ये चोरव्याघ्रादिहन्यमानस्य ब्राह्मणस्य तादृशगवां द्वादशकस्य वा रक्षणे द्विजान्विज्ञाप्याश्वमेधावभृथस्नाने वा सद्य एव शुद्धिः । प्रक्रान्तव्रतमध्ये मरणेऽपि तावतैव पापक्षयः । एवं व्रतमध्ये गोविप्रार्थं प्राणपरित्यागे तत्पर्यन्तं व्यापारं कृत्वा जीवनेऽपि वा सद्य एव शुध्यति । यद्वा व्रतमध्ये कुष्ठादिदीर्घतीव्रव्याधिग्रस्तं विप्रं गां वौषधैः संरक्ष्य तदैव शुध्येत् । एवं व्रतमध्ये चोराद्यपहृतविप्रधनार्थं तैः सह युद्ध्वा तद्धनस्य विप्राय प्रापणे तन्निमित्तमरणे वा बहुशस्त्रक्षतस्य मृतकल्पस्य तैस्त्यक्तस्य धनानयनं विनाऽपि जीवनेऽपि वा सद्य एव शुद्धिः । न त्वग्रे पुनर्व्रतकरणम् । इदं चामत्याऽनिच्छया वा निर्गुणं विप्रं हन्तुर्ज्ञेयम् । प्रक्रान्तव्रतक्षत्रियस्य जातिमात्रविप्रस्य च कामतः सगुणेन वधे कृते द्वादशाब्दं कार्यम् । अज्ञानतः षडब्दम् । मितहविष्याशिनः शाखान्तं त्रिर्वेदसंहिताब्राह्मणपारायणं वा । पूर्वमेवाऽऽहिताग्नेः कृतप्रकृतियज्ञस्य विश्वजिदभिजित्त्रिवृदग्निष्टुतामन्यतमयागकरणं वा । विन्ध्योत्तरवासिना तु निर्गुणेन सगुणेन वा जातिमात्रनिर्गुणविप्रवधे विकर्मवर्जितचातुर्वर्ण्यात्पथि भिक्षां कुर्वता छत्रोपानद्वर्जितेन गोकुलगोष्ठग्रामतपोवनतीर्थादिषु स्वकर्म ख्यापयन्समुद्रसेतुदर्श-

नस्नाने कृत्वा विप्रेभ्यो भोजनवस्त्रपवित्रादि देयम् । अत्र गोशतं दक्षिणा । जातिमात्रविप्रस्य वेदाभ्यासादिहीनेन धनवता वधे वेदवित्संप्रदानजीवनपर्याप्तभूम्यादिधनदानम् । द्वादशवर्षोपभोग्यद्रव्यसहितगृहदानं वा तावत्सर्वस्वदानं वा । अशक्तावुत्तरोत्तरम् । अत्र प्रतिग्रहीतुर्वैश्वानरेष्टिरनाहिताग्नेर्वैश्वानरश्चरुः प्रायश्चित्तम् । अज्ञानतः सोमयागदीक्षितब्राह्मणवधे चतुर्विंशतिवार्षिकमुक्तव्रतं गोसहस्रद्वयं वा । आचार्यादिवधेऽप्येवम् । गोसहस्रसहितं द्वादशाब्दमित्यन्ये । अतिगुणवता गुणहीनस्याज्ञानतो वधे पूर्वोक्तं व्रतं वर्षं कृत्वाऽन्ते रत्नहेमगोधान्यतिलदधिघृतदानम् । मत्यादौ द्विगुणादि । ज्ञानतो ब्राह्मणज्ञातीयषण्ढवधे शूद्रवधव्रतम् । अज्ञानतस्तद्वधे गङ्गायमुनासंगमे त्रिषवणस्नायी त्रिरात्रोपवासेन शुध्यति । पतितब्राह्मणवधे त्रिवर्षं प्रत्यहं प्राणायामत्रयपूर्वकं गायत्रीजपपूर्वकं च वने भिक्षाशनमन्ते षोडशविप्रभोजनं च । अनुपनीतविप्रवधे निर्गुणविप्रवधोक्तं षडब्दम् । अनुपनीतत्वेन तस्य निर्गुणत्वात् । अविज्ञातस्त्रीपुंस्त्वादिकस्य ब्राह्मणगर्भस्य वधे तु द्वादशाब्दम् । विज्ञातस्त्रीत्वादौ तत्तत्प्रयुक्तम् । अत्रैकप्रयत्नकृतानेकविप्रवधेऽप्येकमेव प्रायश्चित्तं तन्त्रेण । तन्त्रत्वं च समानदेशकालकर्तृत्वेनागृह्यमाणविशेषत्वम् । अनेकप्रयत्नकृते तु नानावधे प्रायश्चित्तावृत्तिस्तृतीयविप्रवधपर्यन्तम् । चतुर्थे तु विप्रवधे प्रायश्चित्ताभावः । केचिदामरणमुक्तप्रायश्चित्ताचरणमित्याहुः । बहुभिरेकविप्रस्य वधे यदीयप्रहारेण मरणं संप्लाक्षप्रस्रवणादारभ्य पश्चिमोदधेः प्रतिस्रोतः सरस्वतीं गच्छेत् । अन्ये षण्मासान्कृच्छ्रांश्चरेयुः । तिरस्कृतनिर्गुणविप्रस्य क्रोधाद्विषशस्त्रादिनिर्गुणोपरिमरणे त्रैवार्षिकं तद्व्रतम् । निमित्तिनो गुणवत्त्वे त्वब्दं गृहक्षेत्रादिसंबन्धे निर्गुणमरणे सगुणस्यापि त्रैवार्षिकमेव । सगुणस्य तथामरणे तु द्वादशाब्दमेव । यदा त्वाक्रोशताडनादिसंबन्धमन्तरेण भ्रान्त्यादिवशात्परमुद्दिश्य विप्रस्याऽऽत्महनने तु हन्तुरेव दोषो नोद्दिश्यस्य । तथा यत्राऽऽक्रुष्टोऽपि मरणादर्वाक्धनदानादिना तोषित उच्चैः श्रावयति नाऽऽक्रोशकस्यापराध इति सोऽप्यदोषः । इति ब्रह्महत्याप्रायश्चित्तानि ॥

अथानुग्राहकादीनाम्—तत्र साक्षादनुग्राहकः कर्तुर्द्वादशाब्दचतुर्विंशत्यब्दषडब्दादि यत्प्राप्नुयात्तत्पादोनं चरेत् । प्रयोजकोऽर्धम् । अनुमन्ता

सार्धपादम् । निमित्तकर्ता पादं चरेत् । अत्र च तिरस्कृतेत्याद्यनुपदोक्ता व्यवस्था निमित्तकर्तुरुक्तैव । अनुग्राहकप्रयोजकादीनामपि येऽनुग्राहकप्रयोजकादयस्तेषामपि प्रायश्चित्तं कल्प्यम् । तथा प्रोत्साहकादीनामपि दण्डप्रायश्चित्ते कल्प्ये ।

प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मणाम् ॥
उपेक्षकः शक्तिमांश्चेद्दोषवक्ताऽनुमोदकः ।
य एव म्रियमाणं तु ब्राह्मणं समुपेक्षते ॥
अकार्यकारिणां तेषां प्रायश्चित्तं प्रकल्पयेत् ॥ इति ।

कस्मिंश्चिद्ब्रह्मवधे प्रयोजकस्यान्यस्मिन्साक्षात्कर्तृत्व एकस्य गुरुलघुप्रायश्चित्तसंनिपातस्तत्र द्वादशवार्षिकादिगुर्वन्तःपातिनः प्रयोजकादिलघुप्रायश्चित्तस्य प्रसङ्गादिसिद्धिर्न पृथगनुष्ठानम् । अग्निदगरदशस्त्रपाणिधनापहारिक्षेत्रहरदारहारकाः शापोद्यत आथर्वणाद्यभिचारैर्हन्ता राजगामिपैशुनकर्ता चैते वर्तमानतद्व्यापारा आततायिनः । एषामग्निविषशस्त्रादिहरणमात्रेण निवारणसंभवे यदि तद्वधः क्रियते तदा तत्तद्वधनिमित्तं प्रायश्चित्तं भवत्येव । अशक्यनिवारणे तु गोविप्रादीनामप्येषां हननादावुद्यतानां वधे दोषाभावः । क्षत्रियादीनां ब्रह्मचारिवनस्थयतीनां च क्रमेण द्विगुणं त्रिगुणं चतुर्गुणं च प्रायश्चित्तम् । केचित्तु क्षत्रियवैश्यशूद्राणां कामतः प्रवृत्तावेतद्विषये मरणमेव तच्च सर्वस्वदानपूर्वकं मुण्डितसर्वाङ्गस्य करीषाग्नावेव । अकामतस्त्वामरणं महाव्रताभ्यास इत्याहुः । यत्तु यथोक्तं प्रायश्चित्तं विप्रस्यैव क्षत्रियस्य तत्पादोनं वैश्यस्यार्धं शूद्रस्य पादमिति स्मृत्यन्तर उक्तं तत्प्रातिलोम्यानुष्ठितमनुष्यवधचौर्यपारदार्यपारुष्येतिचतुर्विधसाहसव्यतिरिक्तपापविषयम् । बालवृद्धस्त्रीणामर्धम् । ब्रह्मचारिणोऽपि षोडशवर्षात्पूर्वं बालत्वादर्धम् । षोडशवर्षादूर्ध्वं तस्य द्विगुणम् । अनुपनीतबालानामनूढस्त्रीणां च पादमेव । विप्रात्क्षत्रियायामुत्पन्नो मूर्धावसिक्तस्तस्य क्षत्रियन्यूनमध्यर्धं द्वादशाब्दम् । एवमनुलोमेषु सर्वत्र न्यूनत्वमूह्यम् । प्रतिलोमोत्पन्नानामनयैव दिशा प्रायश्चित्ताधिक्यमप्यूह्यम् ।

साग्निकस्याज्ञानान्महापापे तदग्नीन्पुत्रादयोऽप्रायश्चित्तं पालयेयुः । ज्ञानाच्चेदग्नीनप्सु प्रक्षिप्य मरणान्तं प्रायश्चित्तम् । आत्मघाते तु तत्पु-

त्रादयो मृतजातीयवधप्रायश्चित्तं समुचितं तप्तकृच्छ्रद्वयं चान्द्रं कुर्युः । आत्मघातादिपापिनां शवस्पर्शालंकरणवहनदहनाश्रुपातास्थिसंचयदशाहक्रियादिकमज्ञानतः कृत्वा मनूक्तं तप्तकृच्छ्रं द्वादशाहम् । ज्ञानतो द्विगुणम् । तप्तकृच्छ्रसंहितं चान्द्रं वा । एषु स्पर्शाश्रुतपातभिन्नेष्वेकैककरणे तु ज्ञानतः सप्ताहसाध्यं सांतपनं तप्तकृच्छ्रं वा । अज्ञानतो मासं भिक्षाहारस्त्रिषवणस्नानं च । स्पर्शाश्रुपातयोस्तु प्रत्येकमेकोपवासः । मत्याऽभ्यासे कृच्छ्रातिकृच्छ्रचान्द्रादि योग्यतया योज्यम् । आहिताग्नेश्चैतादृशस्य लौकिकाग्निना दाहोऽमन्त्रकः । दाहकर्तुः प्राजापत्यमात्मघातादिप्रायश्चित्तं पुत्रादिः कृत्वाऽस्थीनि विधिवद्दहेत् ।

अथ ब्रह्महत्यादिव्रतादेशविषय उच्यते—स द्विविधः । तद्रूपताप्रतिपादेन सादृशप्रतिपादेन वा । तत्राऽऽद्यविषये ब्रह्महव्रतं पादोनम् । द्वितीयविषये त्वर्धम् । तत्राऽऽद्यं यथा—सोमयागस्थक्षत्रियतत्स्थवैश्ययोरात्रेय्याश्च वधः । रजोदर्शनात्प्रभृति षोडशदिनान्तं वन्ध्यातिरिक्ता ऋयात्रेयी । अत्रिगोत्रोत्पन्ना नारी च गर्भिणी च । केचित्तु तादृशी वन्ध्याऽप्यात्रेयीत्याहुः । आत्रेयी विप्रसंबन्धिन्येव विप्रतुल्या । अत्रापि सगुणनिर्गुणादिव्यवस्था योज्या । एवं यागस्थेस्त्रीवधः । आहिताग्निद्विजाग्र्यभार्यावधः । विप्रवधफलकानृतसाक्ष्यं विप्रसंबन्धिनिक्षेपहरणं च । अत्र नववार्षिकब्रह्महव्रतम् । कामादिकृते द्वैगुण्यादि । नात्र प्राणान्तिकत्वम् । क्षत्रियाद्यात्रेयीवधे तु क्षत्रियादिवधोक्तं प्रायश्चित्तम् । द्वितीयं यथा—गुरूणां मुख्यानामाक्षेपोऽनृतपापाभिशंसनं च । वेदानामप्रामाण्याभिधानम् । विप्रातिरिक्तमित्रवधः । अधीतवेदस्य बौद्धादिशास्त्रावष्टम्भेन नाशनम् । प्राणिमात्रवधफलकानृतसाक्ष्यम् । गुणवत्परस्परं स्पर्धायां गुणवत्त्वपरीक्षायां वाऽनृतवचनम् । राजकुले ब्राह्मणपीडाजनकपैशू(शु)न्यं चेत्यादि । एतेष्वन्येषु च पूर्वोक्तेषु च ब्रह्महत्यासदृशेषु षडब्दं ब्रह्महव्रतम् । एषु कपालध्वजधारणादिकं नास्ति । ब्राह्मणादिहव(न)ने कृतनिश्चये तदर्ध(र्थं) समागत्य सम्यक्शस्त्रादिप्रहारे कृते कथंचित्प्रतिघातादिप्रतिबन्धवशादसौ न मृतस्तथाऽपि प्रहर्तुर्यथावर्णं ब्रह्महत्याप्रायश्चित्तं भवत्येव । तच्च पादोनमिति मिताक्षरादौ । मनसा निश्चितब्रह्मवधस्य स्वत एवोपरतजिघांसस्य द्वादशरात्रमुदकमात्रभक्षतयोपवासाः । चिकित्सादिनोपकारे

क्रियमाणे विप्रादिमरणे तु न किमपि पापम् । इति ब्रह्महत्याप्रायश्चित्तप्रकरणम् ॥

अथ सुरापानप्रायश्चित्तानि—मदजनकोऽन्नविकारविशेषः सुरा । तस्या विप्रैर्ज्ञानपूर्वं कामतः सकृदपि पाने मरणान्तमेव तेषां प्रायश्चित्तम् । तच्चाग्निवर्णसुराम्बुगोघृतगोक्षीरस्त्रीगवीमूत्राणामन्यतमपानेन । पानं च लोहपात्रेण ताम्रपात्रेण वाऽऽर्द्रवासाः कुर्यात् । तत्पानेनाप्यमरणे तु यावत्प्राणवियोगं तदनन्तरमनशनम् । मरणान्तिके चास्मिन्पर्षदुपदेशो नाऽऽवश्यकः । किंतु स्वपर्यालोचनेनापि । अकामतो जलबुद्ध्या वैकवारं सुरापाने गोकेशमेषादिलोमनिर्मितवस्त्रावृतस्य जटिलस्य द्वादशवार्षिकं ब्रह्महव्रतम् । अकामतोऽभ्यासे तु मरणमेव । उदकबुद्ध्या पीतायाः सुरायास्तत्कालमेव वमने तु पूर्वोक्तधर्मवतो वर्षत्रयं रात्रौ सकृत्तिलकल्कतन्दुलकरणान्यतरमात्रभक्षणं नत्वन्नभक्षणं प्रत्यहं पञ्चगव्यपानं च । अथवोभयत्र भूमिदानपूर्वकं पुनःसंस्कारः । अनेनेह व्यवहार्यतैव । द्वादशाब्दासमर्थस्य पापक्षयोऽपीति मिताक्षरा । अज्ञानतः सुरायास्तालुमात्रसंयोगे वार्षिकमिदम् । ज्ञानतो द्विगुणम् । अकामतः सुरासंस्पृष्टस्य शुष्कतद्रसस्यान्नस्य द्रव्यान्तरस्य च वा भक्षणे तु पुनःसंस्कार एव । विप्रस्य सुरागन्धाघ्राणे सांतपनकृच्छ्रम् । अकामतः कायम् । अत्र क्षत्रियवैश्ययोः पादपादहानिरिति प्राञ्चः । ज्ञानतः कामपूर्वं सुरापाने तु मरणमेव सर्वेषाम् । गौडी माध्वी च गौणी सुरा । मुख्या तु पैष्ट्येव । तत्र मुख्यायां प्रायश्चित्तमुक्तम् । गौडीमाध्व्योस्तु मत्याऽभ्यासेऽमत्याऽत्यन्ताभ्यासे च माधवीये—

मत्या मद्यममत्या वा पुनः पीत्वा द्विजोत्तमः ।
ततोऽग्निवर्णं तत्पीत्वा मृतः शुध्येत्स किल्बिषात् ॥ इति ।

अकामतो गौडीमाध्व्योः सकृत्पाने द्विजानां कृच्छ्रातिकृच्छ्रं चान्द्रं च कृत्वा पुनःसंस्कारो घृतप्राशनं च । मतिपूर्वकं तयोः सकृत्पाने छर्दने च त्रैवार्षिकं कणभक्षणम् । कामतो द्विस्त्रिरभ्यासे छर्दने च षडब्दम् । उभयत्र च्छर्दनाभावेऽप्येवमेवेति स्मृत्यर्थसारे । अकामतो द्विस्त्रिरभ्यासे तु त्वब्दकृच्छ्रं पुनःसंस्कारश्च । अमत्या मत्या वाऽधिकाभ्यासे द्वादशाब्दमिति स्मृत्यर्थसारे । तेन पूर्वोक्तं माध-

वीर्यं मरणान्तिकं द्वादशाधिकाभ्यासे निरन्तरं बहुकालाभ्यासे वा योज्यम् ॥

अथमद्यपानप्रायश्चित्तम्—पनसादिजन्यं मदकारणं द्रवद्रव्यं मद्यमिति माधवः । तच्चैकादशधा । पानसं द्राक्षं माधुकरं खार्जूरं तालमैक्षवं मधूत्थं सैरमारिष्टं मैरेयं नारीकेलजमिति भेदात् । एतत्पाने क्षत्रियादेर्न दोषः । विप्रस्यामत्या सकृत्पाने तप्तकृच्छ्रपूर्वकं पुनःसंस्कारः । ज्ञानतः कामतश्च सकृत्पाने कृच्छ्रातिकृच्छ्रं समुद्रगायां नद्यां चान्द्रं वा कृत्वा पुनरुपनयनं घृतप्राशनं च । मुखमात्रप्रवेशे तु षड्रात्रं पञ्चोदुम्बरबिल्वपलाशकुशोदकपानम् । गौडीमाध्व्योस्तु मुखमात्रप्रवेशे द्विगुणम् । कामतास्त्विदमेव द्विगुणम् । अभ्यासे तु तप्तकृच्छ्रादेश्चान्द्रादेश्चाऽऽवृत्तिः । अत्यन्ताभ्यासे मरणमेव । अज्ञानतोऽत्यन्ताभ्यासे द्वादशवार्षिकम् । प्राञ्चस्तु विप्रस्य कामतः सकृदपि तालादिमद्यपाने मरणान्तमेवेत्याहुः । अनन्यौषधसाध्यव्याध्युपशमनार्थे सुरापाने त्वज्ञानकृते त्रैमासिकमब्दपादं चान्द्रायणं वा कृत्वा पुनरुपनयनम् । मद्यपाने तु तथाकृते तप्तकृच्छ्रसहितः पुनःसंस्कारः । ज्ञानकृते तु तप्तकृच्छ्रपराकचान्द्राणि । मद्ये तप्तकृच्छ्रद्वयम् । पुनःसंस्कार उभयत्र । सुरादेः पानविष[यकं]प्रायश्चित्तं तत्पित्रादिभिः कार्यम् । अस्यानुपनीतस्य सुरापाने तु त्रैवार्षिकं पित्रादिभिः कार्यम् । अनूढाया एतदर्धम् । कामकारेऽपि नानयोर्मरणान्तिकं किंतु द्विगुणम् । तेन षड्वार्षिकम् । उपनीतस्य षोडशवर्षपर्यन्तं षडब्दम् । केचिद्द्वादशवर्षपर्यन्तं पादमेव । तदूर्ध्वमर्धमित्याहुः । एवं वृद्धातुरस्त्रीणामप्यर्धम् । एवं रोगनाशार्थं पानेऽपि बालादीनां यथायोग्यं कल्प्यम् । इति मद्यपानप्रायश्चित्तम् ।

अथ सुरापानसमानपापानि—वेदनिन्दा व्यसनासक्त्याऽधीतवेदविस्मरणं कूटसाक्ष्यं विप्रव्यतिरिक्तमित्रवधो मत्याऽत्यन्ताभ्यासेन गर्हितपलाण्ड्वादिभक्षणं रजस्वलामुखचुम्बनं वाङ्मनःकायकर्मणामनार्जवरूपं जैह्म्यम् । आत्मोत्कर्षार्थं राजकुलादौ चतुर्वेदोऽहमित्याद्यनृतभाषणमेतानि सुरापानसमानानि । अत्र ब्रह्मवधसमानानामपि केषांचिद्ग्रहणं प्रायश्चित्तविकल्पार्थम् । एतेषु सुरापानसमेष्वर्धप्रायश्चित्तम् । इति सुरापानादि[सम]प्रायश्चित्तानि ॥

अथ स्वर्णस्तेयप्रायश्चित्तम्—विप्रस्वामिकाशीतिगुञ्जापरिमितसुवर्णापहरणं महापातकम् । इतो न्यूनहरणं न महापातकम् । अपहरणं च समक्षं परोक्षं बलाच्चौर्येण क्रयादिस्वत्वहेतुं विना ग्रहणमुच्यते । ज्ञानतस्तु तत्कर्ता लोहमयं मुसलमादाय प्रकीर्णकेशः स्वदोषं स्वर्णापहाराख्यं ख्यापयन्ननेन मुसलेन मां प्रहर इति वदन्राज्ञे मुसलमर्पयेत् । तेन सकृदेवाभिहतो मृतः शुद्धः । यदि दृढप्रहारार्तोऽपि जीवेत्तदाऽपि शुध्यति । न ब्राह्मणं हन्यादित्यादिनिषेधस्तु रागप्राप्तविप्रवधविषयः । अहनने राज्ञः पापश्रवणात् । माधवस्त्वेकस्य तस्य मरणे बहूनां तदीयमित्रकलत्रादीनामनाथतया मरणं संभाव्य यदि राजा दयया धनदण्डादिपुरःसरं मुञ्चति तदाऽपि शुद्ध इत्याह । यदि राजा दृढं हन्तुमसमर्थस्तदा ताम्रमयमायुधं तस्मै दद्यात्तेनाऽऽत्मानं घातयेत् । मरणात्पूतो भवति । यत्नपूर्वकं कामतो हरणे मुण्डितकेशो घृताक्तः स्वकर्म ख्यापयन्गोमयाग्निना पादप्रभृत्यात्मानं दाहयेत् । एतच्चापहृतसुवर्णादेकादशगुणं स्वर्णं तत्स्वामिने दत्त्वैव कार्यम् । गुरुश्रोत्रिययागस्थविप्रसुवर्णहरणे कारीषाग्निदाह एव । क्षत्रियादीनामपहर्तृत्वे सर्वथा कारीषदाह एव । स्मृत्यर्थसारे तु सुवर्णस्तेयी विप्रो व्रतमेवाऽऽचरेत् । न दण्डेनाऽऽत्मानं घातयेत् । न च राजा विप्रं हन्यादित्युक्तम् । अकामतो रजतादिबुद्ध्याऽपहारे सुरापोक्तं द्वादशवार्षिकम् । कामतो रजतादिबुद्ध्याऽपहारेऽप्येतदेव । शूलपाणिस्तु कामतो रजतादिबुद्ध्याऽपहार एव द्वादशाब्दम् । अकामतस्तद्बुद्ध्याऽपहारे तु षड्वार्षिकमित्याह । द्वादशवार्षिकविषयेऽपहर्तुर्महाधनिकत्व आत्मतुलितहेमदानम् । निर्गुणस्वामिकहरणे सगुणस्य नववार्षिकम् । कश्चित्पादोनसुवर्णहरणेऽप्येतदेवाऽऽह । यदा क्षुत्क्षामकुटुम्बभरणार्थं सगुणोऽपि विप्रो निर्गुणस्वामिकमपहरति तदा षडब्दम् । तीर्थयात्रासहितं षड्वार्षिकमिति माधवः । कश्चिदर्धसुवर्णहरणेऽप्येतदेवाऽऽह । ब्राह्मणान्यस्वामिकसुवर्णहरणं न महापातकम् । किंतूपपातकमिति मिताक्षरा । यदा त्वपहारानन्तरमेवानुतप्य त्यजति प्रत्यर्पयति वा तदा चतुर्थकालमिताशिनस्त्रिवर्षमवस्थानम् । क्षत्रियादिसुवर्णापहारेऽप्येतदेवेति केचित् । क्षत्रियादिस्वामिकं हरणमुपपातकमित्यपरे । रजतताम्रादिसंसृष्टसुवर्णापहारेऽपि द्वादशाब्दमेव । यस्तु ताम्रादि

कस्य रसवेधाद्यापादितस्वर्णत्वस्यापहार उपपातकमेव । मनसाऽपहारं संकल्प्य प्रवृत्तस्य स्वत एव उपरतस्य द्वादशरात्रं वायुभक्षणम् । मनसि पापध्यानमात्रेण प्रणवव्याहृतिजपपूर्वकं त्रिरात्रं प्राणायामाः । वाचाऽभिलाषे प्राजापत्यम् । स्त्रीबालादिष्वर्धादिव्यवस्था प्राग्वत् । क्षत्रियादेरपहर्तृत्वे क्रमेण द्विगुणं त्रिगुणं चतुर्गुणम् । ज्ञानतस्तु मरणमेवेति शूलपाणिः क्षत्रियादेः पादपादहानिरेव । द्वैगुण्यादिकं तु प्रकरणाद्विप्रवधविषयमिति भवदेवः । वालाग्रमात्रसुवर्णापहार एकः प्राणायामः । लिक्षामितापहारे तत्त्रयम् । राजसर्षपतुल्ये तच्चतुष्टयमष्टोत्तरशतगायत्रीजपश्च । गौरसर्षपतुल्येऽष्टसहस्रगायत्रीजपः । यवमितसुवर्णस्तेये दिनद्वयं तज्जपः । कृष्णलस्वर्णस्तेये सांतपनकृच्छ्रम् । माषस्वर्णापहारे मासत्रयं गोमूत्रयावकपानम् । पञ्चगुञ्जात्मको माषस्ते सुवर्णस्तु षोडश । माषाधिकसुवर्णमानन्यूनहेमापहारे वत्सरं यावकव्रतम् । सुवर्णपरिमाणतो न्यूनस्यापि बलादपहरणे मरणान्तमेव । सुवर्णमानन्यूनरजतस्तेये सांतपनम् । तत ऊर्ध्वं दशनिष्कपर्यन्तं चान्द्रम् । तत आशतनिष्कं चान्द्रद्वयम् । तत आसहस्रात्त्रिगुणम् । सहस्रनिष्काधिकरजतस्तेये स्वर्णस्तेये(य)समत्वान्नवाब्दं ब्रह्महव्रतम् । ताम्रकांस्यपित्तलादीनां सहस्रनिष्कमितस्तेये पराकम् । निष्कसहस्ररजतमूल्यानामेषां स्तेये द्वादशाब्दम् । एवं दशनिष्कमूल्यरत्नहरणे चान्द्रम् । आशतं तद्द्वयम् । आसहस्रं तत्त्रयम् । सहस्रनिष्काधिकमूल्यरत्नहरणे ब्रह्मवधसमत्वान्नवाब्दम् ।

सहस्राधिकमूल्यविप्रस्वामिकाश्वमनुष्यभूमिगोव्रजानां सुवर्णभिन्ननिक्षेपस्य च हरणमित्येतानि सुवर्णस्तेयसमानि । एतेषु षडब्दम् । सहस्राधिकमूल्यविप्रस्वामिकवस्तुमात्रहरणं सुवर्णस्तेयसममित्यपरे । युगपदनेकसुवर्णमितहेमापहारेऽप्येकमेव प्रायश्चित्तम् । न प्रायश्चित्तावृत्तिर्हरणक्रियाया एकत्वात् । कालभेदे प्रयत्नभेदे च तदावृत्तिः । इति सुवर्णस्तेयप्रायश्चित्तानि ॥

अथ गुरुतल्पप्रायश्चित्तम्—गुरुरत्र पिता । तल्पस्तत्पत्नी । गमनं चात्र रेतःसेकपर्यन्तं चेन्महापातकम् । ततोऽर्वाङ्निवृत्तौ त्वनुपातकम् । तत्राज्ञानादकामतोऽपि जनन्यामुत्तमवर्णतत्सपत्न्यां च प्रवृत्तस्य सवर्णायां तत्सपत्न्यां तु ज्ञानतः कामतश्च प्रवृत्तस्य मरणान्तमेव । तच्चोभये-

च्छया प्रवृत्तौ गुर्वङ्गनागमनं मया कृतमिति स्वकर्म ख्यापयता मुण्डितसर्वशरीरकेशनखेन घृताक्तेनाग्निवर्णकृते काष्ठशयने तद्वर्णकृतस्यैव लोहमय्या स्त्रीप्रतिमया सह शयानेन तामालिङ्ग्य कार्यम् । स्वेन प्रोत्साहने तु क्षुरेण वृषणौ सलिङ्गौ स्वयं छित्वाऽञ्जलिना गृहीत्वा नैर्ऋत्यां दिशि पृष्ठतो निरीक्षणमकुर्वन्नकुटिलगतिरग्रतःस्थितमविचारयन्प्राणान्तं गच्छेत् । एवं गच्छन्यत्रैक(व) कुड्यादिना प्रतिबध्यते तत्रैव मरणान्तं तिष्ठेत् । तया प्रोत्साहितस्य तप्तलोहशयनमात्रम् । जनन्यामुत्तमवर्णतत्सपत्न्यां चाज्ञानादकामतः प्रवृत्तावेतदन्यतममेवेत्यन्ये । कामकृते सर्वत्र प्रागुक्तमरणान्तं कारीषाग्निदाहो वा । अकामतोऽभ्यासेऽप्येवम् । इदं मुख्यपुत्रस्यैव । न तु दत्तकादीनाम् । दत्तकस्य न्यूनं कल्प्यमिति मयूखे । सवर्णायां मातृसपत्न्यामकामादज्ञानतश्च प्रवृत्तौ द्वादशाब्दम् । अस्यां कामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तौ द्वादशवार्षिकम् । जनन्यामुत्तमवर्णतत्सपत्न्यां चाकामतः प्रवृत्तस्य रेतःसेकात्पूर्वं निवृत्तौ द्वादशवार्षिकम् । एषु त्रिष्वकामतोऽर्धम् । विप्रपुत्रस्य क्षत्रियां पितृभार्यां गच्छतो नववार्षिकम् । वैश्यां षड्वार्षिकम् । शूद्रायां त्रैवार्षिकम् । अभ्यासे तिसृष्वपि द्वादशाब्दम् । अत्यन्ताभ्यासे मरणान्तमेव । गुरुपत्नीसाम्यात् । मातुः सपत्नीं सवर्णां व्यभिचारिणीमज्ञानतो गच्छतो वेदजपसहितचान्द्रायणत्रयम् । ज्ञानतः संवत्सरं ब्रह्महव्रतम् । एवं लघुप्रायश्चित्तानि व्यभिचार्यनुत्तमवर्णाविषयेषु व्यवस्थया योज्यानि । गर्भोत्पत्तौ त्वेतान्येव द्विगुणानि । मरणातिरिक्तविषये गमनावृत्तौ प्रायश्चित्तावृत्तिर्यत्र द्विगुणोक्तिस्तत्र द्वैगुण्यावृत्तिश्च । सर्वत्र रेतःसेकात्प्राङ्निवृत्तौ मरणान्तविषये द्वादशाब्दम् । अन्यविषये रेतःसेकाभावे तत्तदर्धम् । गुरूपभुक्तास्वपि साधारणस्त्रीषु गमने गुरुतल्पदोषो न । आसु कन्यादूषणादिदोषो न । किंतु पूर्वोक्तं तत्प्रायश्चित्तं द्विगुणम् । स्त्रीणामपि पुत्रादिष्वेषु मत्या प्रवृत्तौ मरणान्तमेव । अमत्या प्रवृत्तौ द्वादशाब्दिकं पुरुषोक्तवत्कार्यम् । अन्ये तु स्त्रीणामपि कामतः प्रवृत्तौ सर्वत्र पुरुषोक्तार्धक्लृप्त्या योज्यमित्याहुः ॥

अथाऽऽतिदेशिकप्रायश्चित्तानि—पितृष्वसा मातृष्वसा श्वश्रूः पितृव्यभ्रातृमातुलाचार्यमित्रशिष्याणां भार्याः सुताश्च सापत्नभगिन्यात्म-

सखी पितृमातृसखी भगिन्याः सखी भगिनी स्नुषा दुहिता शरणागता राज्ञी प्रव्रजिता पतिव्रता धात्री चैतासु गमनं गुरुतल्परूपम् । पितृव्यभ्रात्रोरुपत्नी( ने )त्रोरेव भार्ययोरेतत् । पितृव्यभार्यादयः स्वस्रादयश्च समानवर्णा एव । आस्वकामतो द्वित्रिपर्यन्ताभ्यासे कामतः सकृद्गमने च नववार्षिकम् । कामतो द्वित्रिवारं गमने नववार्षिकावृत्तिः । अकामतः सकृद्गमने षड्वार्षिकम् । कामतस्त्र्यधिकाभ्यासेऽकामतश्चैकरात्रादूर्ध्वमत्यन्ताभ्यासे च मरणमेव । कुमारी भागिनेयी स्वगोत्रा पितृष्वसृमातृष्वस्रोः कन्या मतामहपितामहयोर्भार्या श्रोत्रियर्त्विगुपाध्यायभार्या गुणवद्रजस्वलानिक्षिप्ते पौत्री दौहित्र्यन्त्यजा म्लेच्छी पुल्कसी चेत्येवमादिषु गमनं गुरुतल्पसमानम् । अन्त्यजाश्चात्र—

चाण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवाश्चेति [ स्मृता अन्त्यजजातयः ] ॥

इति सप्तैव न तु रजकश्चर्मकारश्चेत्यादिप्रतिपादिताः । तेषु लघुप्रायश्चित्तस्योक्तत्वात् । आस्वेकरात्रादूर्ध्वमभ्यासे षड्वार्षिकम् । अन्त्यजादिषु तु ज्ञानतः सकृद्गमने वार्षिकं कृच्छ्रम् । अज्ञानेऽर्धम् । चान्द्रायणद्वयमित्यन्ये । गुरुतल्परूपेषु तत्समेषु च रेतःसेकात्प्राङ्निवृत्तौ चान्द्रायणम् । अकामतस्त्वत्रतप्तकृच्छ्रम् । यदा पुनरेता एवात्यन्तव्यभिचारिणीर्गच्छति तदाऽप्यकामतस्तप्तकृच्छ्रं पराको वा । कामतस्तु चान्द्रम् । अभ्यासे आवृत्त्यादि । इति गुरुतल्परूपतत्समप्रायश्चित्तानि ॥

यानि महापातकसमानि तान्येवानुपातकानि । तेषु च प्रायश्चित्तानि ब्रह्महत्यादिमहापापप्रघट्टकेषु चतुर्षूक्तान्येव ।

अथ गौडादिमते मातृगमनं सापत्नमातृगमनं दुहितृस्वसृस्नुषागमनं चेति पञ्चातिपातकानीति यावन्त्युक्तानि तत्राऽऽद्ययोर्व्यवस्थया प्रायश्चित्तान्युक्तान्येव । दुहितृगमनादिषु त्रिषु सकृद्गमने नवाब्दद्वादशाब्दादि । द्वित्र्याद्यभ्यासेऽग्निप्रवेशादिना मरणमिति । अत्र माधवः—मातरि स्वसुताभगिन्योश्च क्रियानिवृ(र्वृ)त्तौ मरणान्तम् । तच्च मातरि सकृत्त्वेऽन्ययोरसकृत्त्वे । संकल्पाध्यवसाययोश्चान्द्रत्रयम् । शेषे पञ्चविधापराधविषये प्राजापत्यद्वयमित्यष्टविधमैथुनप्रकारभेदेन व्यवस्थामुक्तवान् । इति महापातकानुपातकातिपातकप्रायश्चित्तानि ॥

अथ संसर्गाख्यमहापापादिप्रायश्चित्तम्—संसर्गश्चैकभाण्डपचनतदीयान्नभोजनैकपात्रसहभोजनेष्टिसोमादिश्रौतयागयाजनाध्ययनाध्यापनविवाहैः संभाषणगात्रसंमर्दतन्मुखवायुसंसर्गैकयानारोहणैकासनस्थित्येकखट्वादिशयनैकपङ्क्तिभोजनैश्च । तत्र विवाहो नाम तस्मै कन्यादानं तस्माच्च कन्याग्रहणम् । अत्र विवाहान्तैरेकैकैरप्यनुष्ठितैः सद्यः पातित्यमिति शङ्खः । एतैः प्रत्येकैरपि संवत्सराभ्यस्तैरेव पातित्यमिति मनुः । तत्र विवाहस्य संवत्सराभ्यासस्तत्संबन्धिनिमित्तकभोजनाद्यभ्यासरूपः। संभाषणादिसप्तभिस्तु समुदितैः संवत्सरपर्यन्तं निरन्तराभ्यस्तैरेव पातित्यम् । प्रत्येकं तेषां तथाऽभ्यासेऽपि न पातित्यम् । तथा च चतुर्विधमहापातकिष्वन्यतमेनोक्तद्विविधसंसर्गस्य पातित्यहेतोर्ज्ञानतः करणे द्वादशाब्दम् । अकामतोऽर्धमज्ञानतश्च । एवं च पतितेन समं यस्य वर्षं निरन्तरमज्ञानतः संसर्गः स पातकी व्रतार्धं कुर्यात् । ज्ञानतस्तु तदीयं संपूर्णमेव । मरणस्थानेऽस्य द्वादशाब्दमेव । प्राञ्चस्त्वज्ञानतः संसर्गे पादन्यूनं तत् । ज्ञानतः संपूर्णम् । मरणस्थाने चतुर्विंशतिवार्षिकमित्याहुः । संभाषणादित्रयरहिते यानादिचतुष्टये संवत्सराभ्यस्तेऽपि पञ्चमभागोनं प्रागुक्तम् । तत्सहिते तु पूर्णं द्वादशाब्दादि । अथान्तरितादिगणनादिना पञ्चरात्रमज्ञानतः संसर्गे उपवाससहितपादकृच्छ्रम् । दशाहे कायम् । द्वादशाहसंसर्गे सांतपनम् । पक्षे दशोपवासाः । मासं चेत्पराकः । मासत्रयं चेच्चान्द्रम् । षाण्मासिके चान्द्रद्वयम् । किंचिन्न्यूनेऽब्दे षण्मासकृच्छ्रम् । कामतः संसर्गे तु पञ्चाहे(ह)कृच्छ्रम् । दशाहे तप्तकृच्छ्रम् । पक्षे पराकः । मासे चान्द्रम् । मासत्रये कृच्छ्रं चान्द्रं च । षाण्मासिकेऽर्धाब्दकृच्छ्रम् । किंचिन्न्यूनेऽब्देऽब्दं चान्द्रायणम् । कामतोऽत्यन्तापदि षण्मासम् । पञ्चमहायज्ञादिस्मार्तयाजनेऽङ्गाध्यापने दुहितृभगिनीव्यतिरिक्ते च योनिसंबन्धे षडब्दम् । अकामतोऽर्धम् ।

एवमतिपातकिसंसर्गिणां कामतो नववार्षिकम् । अकामतोऽर्धम् । अनुपातकिसंसर्गिणां षड्वार्षिकम् । अकामतोऽर्धम् । तथोपपातक्यादिसंसर्गिणां मुख्यपातकितुल्यं त्रैवार्षिकं त्रैमासिकादिकम् । अकामतोऽर्धमित्यागूहनीयम् । मयूखे त्वितरपापिसंसर्गे तत्तद्व्रतं पादोनं कार्यमित्युक्तम् ।

सर्वत्र संसर्गे बालस्त्रीवृद्धातुराणामर्धम् । अकामतः पादः । अनुपनीत-बालस्य कामतोऽऽपि पाद एव । अकामतोऽर्धपादः ।

माधवस्तु संसर्गिदोषः कलौ पातित्यापादको न किंतु पापमात्रा-पादकः । संसर्गदोषः पापेष्विति कलिवर्ज्येषु गणनादित्याह । वस्तुतस्तु—

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥

इति पराशरस्मरणात्कृतयुगादौ दोषजनकत्वेनोक्तदेशादिसंसर्गस्यैव कलिवर्ज्येषु गणनं युक्तम् । अयं चापरः कलौ विशेषः—यत्कृते संभाषणमात्रादेव पातित्यं त्रेतायां स्पर्शमात्राद्द्वापरे तत्स्वामिकान्नमात्रग्रहणात्तत्कलौ स्नेहेन समुदितेनैव संभाषणादिकर्मणा । न त्वेकेनेति दिक् ।

संसर्गिसंसर्गिणां पादपादहानिः । तथा च मुख्यमहापापिनां संसर्गवतो द्वादशाब्दम् । तत्संसर्गिणो मुख्यात्तृतीयस्य नवाब्दम् । तृतीयेन संसर्गवतो मुख्याच्चतुर्थस्य षडब्दम् । पञ्चमस्य त्रैवार्षिकम् । मुख्यसंसर्गिणो द्वितीयस्यैव पातित्याच्छ्रौतस्मार्तकर्महानिः । तृतीयादेः प्रायश्चित्तमात्रं न तु वैदिककर्महानिरिति मिताक्षरा । प्राञ्चस्तु पादहानिक्रमेण तृतीयेन संसर्गिव्रतार्धमात्रं कार्यम् । चतुर्थस्य तु मुख्यात्पञ्चमस्य न किंचिदित्याहुः । इति संसर्गिप्रायश्चित्तम् ॥

पतितोत्पन्नानां तु यस्य पतितस्य यदुक्तं तत्तृतीयांशः पुंसम् । कन्यानां तु नवमांशः । पतितोत्पन्नां कन्यां तदीयधनरहितां विवस्त्रां कृतपूर्वोक्तपतितनवमांशप्रायश्चित्तामहोरात्रोपोषितां स्वकीयशुक्लवाससाऽऽच्छादितां नाहमेतेषां नैते ममेति त्रिरुच्चैर्वदन्तीं देवालयादौ स्वगृहे वा विवाहयेत् ।

अथ पतिता महापातकिनोऽनुपातकिनस्तत्संसर्गिणश्च तथा नास्तिकः प्रमादान्नास्तिक्याद्वा चिरं श्रौतस्मार्तकर्मत्यागी पतितपुत्राद्यत्यागी महापापेष्वनुपातकेषु तत्कर्तॄणां प्रयोजकः । गोघ्नादयो मांसभक्षकादयश्च ।

एते चाकृतप्रायश्चित्ता न संव्यवहार्याः। मातुस्तु तादृश्या अपि न तथा किंतु सेवापोषणं कार्यं पृथक्। पितुरपि महापातकिन एव त्यागः। प्रकारान्तरेण पतितस्य न त्यागः। किंच पितुर्दोषं स्वयं ज्ञात्वाऽपि प्रथमतः परेभ्यो न कथयेत्। तत्काले स्वयं तेन संव्यवहरेत्। यत्यादेः स्त्रीसंगेषु पुनर्गार्हस्थ्यकरणे प्रायश्चित्ताभाव एव।

आरूढं नैछि(ष्ठि)कं धर्मं यस्तु प्रच्यवते पुनः।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा॥

इति वचनात्। उपपातकत्वात्प्रायश्चित्तं भवत्येवेत्यन्ये। सर्वथा त्वव्यवहार्यता। बहिस्तूभयथा स्मृतेराचाराच्चेति व्याससूत्रात्।

नैष्ठिकानां वनस्थनां यतीनां चावकीर्णिनाम्।
शुद्धानामपि लोकेऽस्मिन्प्रत्यापत्तिर्न विद्यते॥

इति वचनाच्च। एवं स्त्रीबालशरणागतहन्तारः कृतघ्नाश्च कृतप्रायश्चित्ता अपि न संव्यवहार्याः। अतो व्यभिचारिण्या वधे प्रायश्चित्ताल्पत्वेऽपि वचनाद्व्यवहार्यत्वाभाव इति मिताक्षरा। स्त्रीणां महापापातिपापानुपापान्यभ्यस्तोपपातकानि च पातित्यनिमित्तानि। विशेषतो हीनवर्णगमनं स्वगर्भपातनं भर्तृहिंसनं च शिष्यगुरुजुंगितोपगमनानि चेत्येतानि। महापापेषु कृतप्रायश्चित्तेष्वागतेषु सपिण्डास्तेन सह पुण्यजले स्नात्वाऽपां पूर्णकुम्भं पुण्यदेशे काले पुण्यदिङ्मुखा नयेयुः। ततः स गोभ्यो यवसं दत्त्वा गोभिर्भक्षिते तृणे शुद्धः संव्यवहार्यश्च। स्त्रीणामपि पतितानामेव(वं) परिग्रहः। इदं घटस्फोटोत्तरं कृतप्रायश्चित्तस्य परिग्रहविषयमित्यन्ये। वाचस्पतिमिश्रास्तु मत्या महापातकिनोऽतिपातकिनश्च प्रायश्चित्ते कृतेऽपि न व्यवहार्याः। प्रायश्चित्तं तु तेषां परलोकशुद्ध्यर्थमेवेत्याहुः। यस्तु नरो नारी वौद्धत्यात्पातित्येऽपि प्रायश्चित्तं नेच्छति तं सर्वे सपिण्डा बान्धवाश्च राजादिसमक्षमाहूय तत्पापं व्यक्तं कृत्वा मुहुरुपदिशेयुः प्रायश्चित्तं कुर्वाचारं लभस्वेति। स यदि एवमपि नाङ्गी करोति तदा रिक्तादिनिन्द्यतिथौ सायाह्ने ग्रामाद्बहिः संभूय कुत्सितजलादिसंपूर्णं [कुम्भं] प्राचीनावीतिनो दक्षिणामुखा गुरुसंनिधावस्माकं त्वं मृत इति वाऽमुमनुदकं करोमीति वा वदन्तो दर्भेषु च्छिन्नाग्रेषु न्युब्जं

कुर्युः। ततः सर्वे निरीक्ष्यमाणा अप उपस्पृश्य ग्रामं प्रविशेयुः। सपिण्डानामेकाहमाशौचम्। ततोऽधिकारी कर्ता दाहवर्जं जीवन्तमेवोद्दिश्य पिण्डोदकदानादिप्रेतकर्माणि सपिण्ड्याः प्राक्तनानि कुर्यात्। उदकपिण्डादिप्रेतक्रियोत्तरं पात्रनिनयनमिति मिताक्षरायां स्पष्टम्। ततः सर्वकर्मबहिष्कृतेन तेन संभाषणादिकं वर्जयेत्। प्रमादात्संभाषणे सावित्रीं जपन्नेकरात्रं तिष्ठेत्। मत्या त्रिरात्रम्। अब्दपर्यन्ताभ्यासे पातित्यम्। स्त्रीणामपि तादृशीनां गृहसमीपे पर्णकुट्यादौ वासं दत्त्वा जुगुप्सितमन्नं प्राणधारणमात्रसमर्थं जीर्णमलिनवस्त्रं च दद्यात्। घटस्फोटोत्तरं शिष्यगागुरुगापतिघ्नीनां च सर्वथैव त्यागः। घटस्फोटप्रयोजनमन्यत्र द्रष्टव्यम्। एकस्मिन्निमित्ते गुरुलघुभूतानेकविरुद्धप्रायश्चित्तादिप्राप्तौ देशकालवयआदिकमवेक्ष्य परिषदा व्यवस्था कल्प्या। यथा-जलवासो हिमदेशे शिशिरकाले च नोपदेष्टव्यः। उपवासादिकं बालवृद्धयोर्न। एवं शक्तिरवेक्ष्या। अन्यथा युवा पित्तप्रकृतिर्निरन्तरोपवासाननुतिष्ठन्व्यापद्येतेत्यादिकमूह्यम्। अनुक्तप्रायश्चित्तेषु जपतपोहोमोपवासदानानि देशकालशक्तिपापलाघवगुरुत्वादिकमपे(वे)क्ष्य कल्प्यानि। तत्र जपो गायत्र्यादेः। होमस्तिलानां व्याहृतिभिर्गायत्र्या वा। तपः—पयोभक्षता शाकहारता फलाशनं प्रसृतियावकता हिरण्योदकप्राशनं ब्रह्मचर्यं तीर्थोदकस्नानमार्द्रवस्त्रताऽनशनमिति तपांसि। दानं हिरण्यगोवस्त्राश्वतिलभूमिघृतानाम्। संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशतिरहानि द्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालः। पापस्य गुरुलघुत्वे त्वर्थवादेन दण्डेन वा ज्ञानकृतत्वादिभिर्वा बोध्ये। एवं पापिनां प्रायश्चित्ताकरणे तामिस्रलोहशृङ्खलरौरवमहारौरवसंघातकालसूत्रकप्रतापनासिपत्रवनान्धतामिस्रप्रभृतिनरकेषु नानाविधेषु प्रथमं वासोऽनन्तरं पुनरस्मिन्संसारे श्वसूकरादिकुयोनिजन्मानि। ततः कदाचिन्मानुषयोनौ जातस्यापि कुरोगित्वम्। रोगाश्चाऽऽरम्भे एव दर्शिताः। एवं च नरकोपभोगक्षीणदोषाणामपि तद्भोगानुमितावशेषाणां प्रायश्चित्तं कार्यम्। अकृतप्रायश्चित्तानां कुष्ठादिरोगिणां दाहकस्य यतिचान्द्रायणम्। गङ्गास्नानविष्णुस्मरणतन्नामजपादिकं सर्वपापप्रायश्चित्तमिति सर्वेष्टसिद्धिः।

श्रीनागोजीभट्टकृतं प्रायश्चित्तेन्दुशेखरम् ।
काशीनाथ उपाध्यायो व्यशोधयदपूरयत् ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतः श्रीमदनन्तोपाध्यायसूनुकाशीनाथोपाध्यायकृतशोधनोपबृंहणपूरणशाली प्रायश्चित्तेन्दुशेखरनामग्रन्थः समाप्तिमगमत् ॥

====

अथ सर्वप्रायश्चित्तप्रयोगः—तत्र षडब्दत्र्यब्दसार्धाब्दादिव्यवस्था प्राजापत्यप्रत्याम्नायाश्च परिभाषोक्ता एव । तत्र त्रिंशत्कृच्छ्रमब्दम् । पञ्चचत्वारिंशत्कृच्छ्रं सार्धाब्दम् । नवतिकृच्छ्रं त्र्यब्दम् । कृच्छ्रं प्राजापत्यमिति पर्यायौ । कृच्छ्रे गवादयस्तन्निष्क्रयरजतनिष्कतदर्धतत्पादादयः प्रत्याम्नायाः । तत्र सामग्र्युपकल्पनम्—फलताम्बूलगन्धपुष्पधूपदीपाः पञ्चगव्यानि मृद्भस्मगोमयदूर्वातिलाः समिद्दर्भा होमार्थं घृतं पर्षद्दक्षिणा निबन्धानुवादकपूजार्थं दक्षिणा पूर्वोत्तराङ्गगोप्रदानविष्णुश्राद्धद्रव्यमिति ।

अथ प्रयोगः—त्र्यवरानेकं वा विप्रं पर्षत्त्वेनोपवेश्य कृतस्नानः शक्तश्चेदार्द्रवासाः कर्ता विप्रान्प्रदक्षिणीकृत्य साष्टाङ्गं प्रणमेत् । विप्रैः किं ते कार्यं मिथ्या मा वादीः सत्यमेव वदेति पृष्टो गोवृषयोर्निष्क्रयीभूतं निष्कतदर्धतत्पादान्यतमप्रमाणं रजतद्रव्यं सभ्येभ्यः संप्रददे न ममेति संकल्पपूर्वकं सभ्याग्रे निधायामुकनाम्नो मम जन्मप्रभृति अद्ययावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णकपातकानां मध्ये संभावितपापानां निरासार्थं प्रायश्चित्तमुपदिशन्तु भवन्त इति वदेत् । पुत्रादिः प्रतिनिधिश्चेन्मम पितुर्जन्मप्रभृतीत्यादि वदेत् । श्रौतस्मार्ताधानाङ्गे तु प्रायश्चित्ते निरासार्थमित्यन्तेऽग्निपरिचरणेऽधिकारार्थं चाग्निविच्छेदप्रायश्चित्तं चोपदिशन्तु भवन्त इति वदेत् । तत्तदेकपापे तु किं ते कार्यमिति प्रश्ने मयाऽमुकवधः कृतोऽमुकभक्षणं वाऽमुकागम्यागमनं कृतमित्यादि प्राकृतमेव पापमुच्चार्य तत्प्रायश्चित्तमुपदिशन्तु भवन्त इति वदेत् । जन्मप्रभृति अद्ययावदित्यादिकं न वदेत् । ततः सर्वे

सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥
मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ।
प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥
पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैः ॥

इति प्रार्थयित्वा । मामनुगृह्णन्तु भवन्त इति नमेत् । ततः सभ्यैः शक्त्यादि विचार्य प्रायश्चित्ते निश्चिते कर्ता चन्दनपुष्पादिभिः पुस्तकपूजामनुवादकपूजां च कृत्वा निबन्धपूजात्वेन किंचिद्द्रव्यं निधायानुवादकाय भृतिरूपां दक्षिणां पापानुसारेण दद्यात् । ततः सभ्याः पुस्तकवाचनपूर्वकमनुवादकस्याग्रे कथयेयुः । अनुवादकश्च कर्तारं वदेत् । तद्यथा— सभ्यैरुपदिष्टोऽनुवादकोऽमुकस्य ते जन्मप्रभृत्यद्य यावज्ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां मध्ये संभावितपापानां निरासार्थं पर्षदुपदिष्टं सार्धाब्दप्रायश्चित्तममुकप्रत्याम्नायद्वारा प्राच्योदीच्याङ्गसहितं त्वयाऽऽचरितव्यम् । तेन तव शुद्धिर्भविष्यति । त्वं कृतार्थो भविष्यसीति त्रिरुपदिशेत् । आधानाङ्गे तु सार्धाब्दप्रायश्चित्तमग्निविच्छेदप्रत्यवायनिरासार्थं विच्छेददिनादारभ्य प्रतिवर्षमेकैककृच्छ्रं चेत्यादि पूर्ववत् । कर्ता, ओमित्यङ्गीकृत्य प्रणम्य पर्षदं विसृजेत् । ततो रिक्तायां सायाह्ने देशकालौ संकीर्त्यामुकशर्मणो मम जन्मप्रभृत्यद्य यावज्ज्ञाताज्ञातमध्ये संभावितानां पापानां निरासार्थं पर्षदुपादिष्टसार्धाब्दप्रायश्चित्तं प्राच्योदीच्याङ्गसहितममुकप्रत्याम्नायेनाहमाचरिष्ये । आधाने त्वाधानाग्निपरिचरणादिपुण्यकर्मण्यधिकारसिद्ध्यर्थं च सार्धाब्दप्रायश्चित्तमग्निविच्छेददिनादारभ्य प्रतिवर्षमेकैककृच्छ्रप्रायश्चित्तं च तन्त्रेण प्राच्योदीच्याङ्गसहितममुकप्रत्याम्नायेनाहमाचरिष्य इति संकल्पः । ततो

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

इति मन्त्रेण क्षौरं कार्यम् । क्षौराभावे सार्धाब्दादिव्रतं द्विगुणं पर्षे

दक्षिणाऽपि द्विगुणा । यत्र तु सभर्तृकस्त्रिया जीवत्पितृकादेश्च क्षौरं निषिद्धं तत्र तद्द्विगुणव्रतं क्षौरं च शिखाकक्षोपस्थवर्जं नखकेशरोम्णामुदक्संस्थं वपनमिति सर्वत्र । रोमवर्जनमप्यन्यत्र । यत्र गोवधादौ विशेषवचनं तत्र प्रायश्चित्ते शिखासहितमपि वपनम् । प्रमादाच्छिखावपने कुशमयशिखां ब्रह्मग्रन्थियुतां दक्षिणकर्णे निदध्यादिति काठके ।

शिखां छिन्दन्ति ये मोहाद्द्वेषादज्ञानतोऽपि वा ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥

इति संग्रहे गृह्याग्निसारे । यज्ञोपवीतसहितशिखात्यागेऽपि पुनरुपनयनमेव । क्रोधादिना केवलयज्ञोपवीतत्यागे तु प्रायश्चित्तं करिष्य इति संकल्प्याऽऽचार्यं वृत्वा सवितारं गायत्र्या तिलैराज्येनाष्टसहस्रं शतं वा जुहुयादिति प्रासङ्गिकम् । क्षौराद्यङ्गजातं च कृच्छ्राधिके भवति न कृच्छ्रे न्यून इति मयूखादौ । प्राजापत्यत्रयमित्याधिके वा प्रायश्चित्ते भवति न तु ततो न्यून इति गृह्याग्निसागरमतम् । क्षौरान्ते गण्डूषान्कृत्वा यथोक्तदन्तकाष्ठेन

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

इति मन्त्रेण दन्तशुद्धिं कृत्वा काष्ठान्तरेण जिह्वामुल्लिख्य स्नात्वा भस्मादिदशस्नानानि कुर्यात् । तत्र प्रायश्चित्ताङ्गं भस्मस्नानं करिष्य इति संकल्प्य भस्म गृहीत्वेशानाय नम इति शिरसि लिम्पेत् । तत्पुरुषाय नम इति मुखे । अघोराय नम इति हृदये । वामदेवाय नम इति गुह्ये । सद्योजाताय नम इति पादयोः । प्रणवेन सर्वाङ्गेषु ईशानादिपा(प)दोपेतैर्मन्त्रैर्वा भस्मस्नानम् । ततः स्नात्वाऽऽचामेत् । अथ गोमयस्नानं करिष्य इति संकल्प्य गोमयमादाय प्रणवेन दिक्षु दक्षिणभागं तीर्थे चोत्तरभागं प्रक्षिप्य शेषं मा नस्तोक इत्यभिमन्त्र्य गन्धद्वारामिति मन्त्रेणाग्रमग्रं चरन्तीनामिति सर्वाङ्गमालिप्य

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥

इति द्वाभ्याम्, अव ते हेळ इति द्वाभ्यां प्रसम्राज इति सूक्तेन च तीर्थं प्रार्थ्य। याः प्रवतो निवत उद्वत इति तीर्थमभिमृश्य स्नात्वा द्विराचामेत्। हिरण्यशृङ्गमित्यादितीर्थप्रार्थनादिकं सर्वं दशविधस्नानान्त एव कार्यमिति मयूखे। ततो मृत्तिकास्नानं संकल्प्य

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे।
शिरसा धारयिष्यामि रक्षस्व मां पदे पदे॥

इति मृत्तिकामभिमन्त्र्य

उद्धृताऽसि वराहेण कृष्णेन शतबाहुना।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥

इति मृदमादाय। नमो मित्रस्य वरुणस्येति सूर्याय प्रदर्श्य। गन्धद्वारामिति मन्त्रेण स्योना पृथिवीति वा, इदं विष्णुरिति वा शिरःप्रभृत्यङ्गानि विलिप्य स्नात्वा द्विराचामेत्। अथवा विस्तरेण मृत्तिकास्नानम्। तद्यथा—बळित्था पर्वतानामिति भूमिं प्रार्थ्य। मा वो रिषत्खनितेति खनित्वा। स्योना पृथिवीति मृदमादाय। आयने ते इति दूर्वामादाय। गायत्र्याऽभ्युक्ष्य भूमौ मृदं निधाय। मृत्तिकास्नानं करिष्य इति संकल्प्य। मृदं कुशोदकेन प्रोक्ष्य दिक्षु क्षिपेत्। तत्र मन्त्राः—त्रातारमिन्द्रमिति पूर्वस्याम्। यमाय मधुमत्तमराज्ञे इति दक्षिणे। तत्त्वा यामीति पश्चिमे। वयं सोम इत्युत्तरे। तत्सूर्य रोदसी इत्युपरि। अधः पश्यस्वेत्यधः। ततोऽङ्गेषु लेपः—सहस्रशीर्षेति शिरसि। अक्षीभ्यां ते नासिकामिति मुखे। ग्रीवाभ्यस्त इति ग्रीवायाम्। आन्त्रेभ्य इति हृदये। नाभा नाभिं न इति नाभौ। त्वमिन्द्र सजोषसेति बाह्वोः। सोमानं स्वरणमिति कक्ष्योः। यः कुक्षिरिति कुक्ष्योः। बह्वीनां पितेति पृष्ठे। मेहनाद्वनं करणादिति जान्वोः। एतावानस्येति पादयोः। यस्य विश्वानि हस्तयोरिति हस्तयोः। अङ्गादङ्गादिति पुरुषसूक्तेन च सर्वाङ्गे। अथ शुद्धोदकस्नानम्। आपो अस्मानित्युक्त्वा सूर्याभिमुख इदं विष्णुरिति मन्त्रेण प्रवाहाभिमुखो मज्जेत्। आपो हि ष्ठेत्यृचेत्यन्ये। अथ पञ्चगव्यैः कुशोदकेन चेति षट् स्नानानि। तत्राऽऽदौ गोमूत्रस्नानं करिष्ये। तत्सवितुरिति गोमूत्रस्नानम्। स्नात्वाऽऽचम्य। एवमग्रेऽपि। गन्धद्वारामिति गोमयस्नानम्। आप्यायस्वेति क्षीरस्नानम्। दधिक्राव्ण

इति दधिस्नानम् । घृतं मिमिक्ष इति तेजोऽसीति वा घृतस्नानम् । देवस्य त्वा सवितुः प्रस० इन्द्रियेणाभिषिञ्चामीति कुशोदकस्नानम् । यद्वै-तानि दशापि स्नानान्यमन्त्रकाण्येव कार्याणि । इमं मे गङ्गे० सुमित्र्या न० समुद्रज्येष्ठा इति चतसृभिः, एतोन्विन्द्रं स्तवेति तिसृ-भिः, तरत्समन्दीति सूक्तेन, पावमानीभिरापो हि ष्ठेति तृचेन मार्जनं च कृत्वा । इमं मे गङ्गे इत्युदकमालोड्य ऋतं चेति तृचेन त्रि-रावृत्तेनाघमर्षणं कृत्वा त्रिर्द्वादशवारं वा मज्जनानि कृत्वा स्नानाङ्गतर्पणं कुर्यात् । अत्र प्राचीनप्रयोगेषु मृतिकास्नानोत्तरं मार्जनाघमर्षणोक्तिर्दृ-श्यते तत्र मूलं मृग्यम् । दशविधस्नानप्रयोगे प्रक्रान्ते स्नानत्रयान्तेऽघम-र्षणं ततः सप्त स्नानानीति क्रमस्य निर्युक्तिकत्वात् । सर्वदशविधस्ना-नान्त एवाघमर्षणतर्पणादेर्मयूखादावुक्तत्वाच्च ।

तर्पणं यथा—ब्रह्मादयो ये देवाः, तान्देवांस्तर्पयामि । भूर्देवांस्तर्प-यामि । भुवर्देवांस्त० । स्वर्देवांस्त० । भूर्भुवः स्वर्देवांस्त० । निवीती—कृष्णद्वैपायनादयो ये ऋषयः, तानृषींस्त० । भूर्ऋषींस्त० । भुवर्ऋषींस्त० । स्वर्ऋषींस्त० । भूर्भुवः स्वर्ऋषींस्त० । प्राचीनावीती—सोमः पितृमान्यमोङ्गिरस्वानग्निष्वात्तादयो ये पितरः, तान्पितॄंस्त० । भूः पितॄंस्त० । भुवः पितॄंस्त० । स्वः पितॄंस्त० । भूर्भुवः स्वः पितॄं-स्तर्पयामि । ततो यक्ष्मतर्पणादिवासःपरिधानान्ते तिलकं धृत्वाऽऽ-चम्य देशकालादि संकीर्त्य विष्णुप्रीत्यर्थं प्रायश्चित्ताङ्गविष्णुश्राद्धसंपत्तये श्रीविष्णूद्देशेन त्र्यधिकयुग्मब्राह्मणभोजनपर्याप्तामनिष्क्रयीभूतं द्रव्यं दातुमहमुत्सृज्ये । तच्चतुर्भ्यो ब्राह्मणेभ्यः पूजनपूर्वकं दद्यात् । तेन पापापहमहाविष्णुः प्रीयताम् । ततः प्रायश्चित्तपूर्वाङ्गगोदानं करिष्य इति संकल्प्य गवामङ्गेष्विति गोदानं प्रत्यक्षं द्रव्यद्वारा वा कुर्यात् । देश-कालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गहोमं करिष्ये । तदङ्गतया स्थण्डिलोल्ले-खनाद्यग्निप्रतिष्ठापनादि करिष्ये । विटनामानमग्निं प्रतिष्ठापयामीत्यन्ते ध्यात्वा प्रायश्चित्तपूर्वाङ्गहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । चक्षुषी आज्येनेत्यन्ते, अग्निं वायुं सूर्यं प्रजापतिं च प्रतिदैवतं सप्तविंशतिसंख्या-व्याहुतिभिः, पृथिवीं विष्णुं रुद्रं ब्रह्माणमग्निं सोमं सवितारं प्रजापतिं प्रजापतिमग्निं स्विष्टकृतं पञ्चगव्येन शेषेण स्विष्टकृतमग्निमिध्मसंनहनेन रुद्रमित्यादि । यद्वाऽऽज्येनेत्यन्ते पापापहमहाविष्णुं व्याहृतिभिरष्टोत्तर-

शतसंख्याज्याहुतिभिः । शेषं समानम् । आज्यसंस्कारकाले पञ्चगव्यं कृत्वाऽऽज्येन सह पर्यग्नि कुर्यात् ।

ताम्रादिपात्रे पलाशादिपत्रपुटे वा ताम्राया गोमूत्रं त्रिपलमष्टमाषं वा गायत्र्याऽऽदाय, श्वेतगोशकृत्षोडशमाषं गन्धद्वारामित्यादाय, पीत-गोक्षीरं कापिलं वा सप्तपलं द्वादशमाषं वाऽऽप्यायस्वेत्यादाय, नीला-याः सप्तपलं दशमाषं वा दधि दधिक्राव्ण इत्यादाय, कृष्णाया घृतमेक-पलमष्टमाषं वा तेजोऽसि शुक्रमसीति वा घृतं मिमिक्ष इति वाऽऽदाय। यथो-क्तगोरभावे गोमात्रस्य मूत्रादि ग्राह्यम् । देवस्य त्वेति कुशोदकमेकपलं चतुर्माषं वा प्रक्षिप्य प्रणवेन यज्ञियकाष्ठेनाऽऽलोड्य प्रणवेनाभिमन्त्रयेत् । आज्यपञ्चगव्यासादनाद्याज्यभागान्ते भूः स्वाहा अग्नय इदम्। भुवः स्वा-हा वायव इदम् । स्वः स्वाहा सूर्यायेदम् । भूर्भुवः स्वः स्वाहा प्रजाप-तय इदम् । इत्याज्यस्य प्रतिदैवतं सप्तविंशतिरित्येवमष्टोत्तरशताहुतीर्हु-त्वा । विष्णुपक्षे भूः स्वाहा विष्णव इदम्। भुवः स्वाहा विष्णव इदम्। स्वः स्वाहा विष्णव इदम् । भूर्भुवः स्वः स्वाहा विष्णव इदम् ।इत्यष्टो-त्तरशताहुतीर्हुत्वा पञ्चगव्यहोमः । तत्र साग्रैः सप्तपत्रकुशैः पञ्चगव्यं गृहीत्वा। इरावती धेनुमती० स्वाहा पृथिव्या इदम्। इदं विष्णु० विष्णव इदम् । मा नः स्तो० रुद्रायेदम् । ब्रह्मजज्ञा० ब्रह्मण इदम्। ब्रह्मस्थाने शं नो देवीति मन्त्रेण। अद्भ्य इति केचित्। अग्नये स्वाहा, अग्नय इदम् । सोमाय स्वाहा सोमायेदम् । तत्सवितुर्वरेण्यं० सूर्यायेदम्। प्रजापते न० व्याहृतिभिर्वा ॐ स्वाहा प्रजापतय इदम् । अग्नये स्विष्टकृते स्वाहा अग्नये स्विष्टकृत इदम्। इति दश पञ्चगव्याहुतीर्हुत्वा। केवलाज्यस्य यदस्येति स्विष्टकृतं हुत्वा प्रायश्चित्तहोमशेषं समाप्य । व्रतग्रहणं करि-ष्य इति द्विजान् पृष्ट्वा कुरुष्वेत्यनुज्ञातः । यत्त्वगस्थिगतं० ॐ इति प्रण-वेन गृहीत्वा प्रणवेनैव सर्वं पञ्चगव्यं पिबेत्। अशक्तौ गोमूत्रादि स्वल्पं ग्राह्यम् । सर्वस्य पेयत्वात् । एतच्च ग्रामाद्बहिर्नद्यादेस्तीरे नक्षत्रदर्शने कार्यम् ।

व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने ।

इति स्मृतेः । मुमूर्षोस्तु गृहादावेव । अस्मिन्दिन उपवासः । अशक्तौ हविष्याशनम् । अयं च पञ्चगव्यस्य दशाहुतिहोमो ब्रह्मकू-र्चाख्यपञ्चगव्यपाने सर्वत्रोह्यः । गृहमागत्य प्रातरारभ्य संकल्पितप्राय-

श्चित्तं संकलिपतप्रत्याम्नायानुसारेणानुष्ठायोत्तराङ्गाणि कुर्यात् । गोनिष्क्रयरजतादिदानपक्षे पञ्चगव्यप्राशनान्त इदं साधोब्दे पञ्चचत्वारिंशत्कृच्छ्रप्रत्याम्नायगोनिष्क्रयीभूतं प्रतिकृच्छ्रं निष्कतदर्धतदर्धान्यतमप्रमाणं रजतद्रव्यं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृज्य इति द्रव्यदानसंकल्पं कृत्वा तदैव द्रव्यं विभज्य दत्त्वा चोत्तराङ्गाणि कुर्यात् । आचरितस्यामुकप्रायश्चित्तस्य साङ्गतार्थमुत्तराङ्गाणि करिष्ये। तत्र होमं कर्तुं स्थण्डिलादि करिष्य इति संकल्प्य पूर्ववदाज्यहोममात्रं व्याहृतिभिः कृत्वा पूर्ववदेव विष्णुश्राद्धं गोदानं च कुर्यात् । नात्र पञ्चगव्यहोमः । अन्ते शक्तेन गोभूहेमादिदशदानानि कार्याणि । अशक्तौ हिरण्यदानम् । गृह्याग्निसागरे तस्मिन्नेव दिन उत्तराङ्गहोमश्च तस्मिन्नेवाग्नौ कार्य इत्येतावन्मात्रमुक्तं तत्र तन्त्रप्रयोगः पृथक्प्रयोगो वेति विचारणीयम् । मम तु पृथगग्निकरणादि युक्तं भाति। कौस्तुभे पूर्वोत्तराङ्गहोमयोरिध्माधानादिस्थालीपाकतन्त्रं कृताकृतमित्युक्तम् । तत्पक्ष आधानान्तेऽन्वाधानपरिसमूहनपरिस्तरणपर्युक्षणाज्यपञ्चगव्यसंस्कारस्रुवसंमार्गार्चनान्तहोमः । होमान्ते स्विष्टकृत्सप्तप्रायश्चित्ताहुतयश्च कृताकृताः । [ततः] परिस्तरणविमोकादि । इति साधोब्दादिसर्वप्रायश्चित्तप्रयोगः ॥

अथ विप्रस्त्रियाः प्रायश्चित्तप्रयोगः—स्त्रीणां होमः कृताकृतः । करणपक्षे विधवायाः क्षौरान्ते पूर्ववत्कृत्वाऽमन्त्रकाणि दश स्नानानि। सधवायास्तु संकल्पान्ते दन्तधावनं कृत्वा तूष्णीं दश स्नानानि । वस्त्रपरिधानान्ते विष्णुश्राद्धगोदाने कृत्वा प्रायश्चित्ताङ्गहोमार्थमाचार्यं त्वां वृण इति विप्रं वृत्वा पूर्ववद्विप्रद्वारा सर्वं पूर्वाङ्गं कारयित्वा स्वयं पञ्चगव्यं तूष्णीं प्राश्य मुख्यप्रत्याम्नायद्रव्यं विसृज्योत्तराङ्गाणि कारयेत् । होमाभावपक्षे दशविधस्नानान्ते विष्णुश्राद्धगोदाने कृत्वा विप्रेण पञ्चगव्यं कारयित्वा तूष्णीं प्राश्य प्रायश्चित्तद्रव्यं संकल्प्य दत्त्वोत्तराङ्गविष्णुश्राद्धगोदानदशदानानि कुर्यात् ।

अथ शूद्रस्य संकल्पान्तमविकृतं प्राग्वत् । ततः क्षौरान्तेऽमन्त्रकदशस्नानानि वस्त्रतिलकधारणान्ते विष्णुश्राद्धगोदाने कृत्वा विप्रद्वारा पञ्चगव्यं कारयित्वा स्वयं तूष्णीं पिबेत् । शूद्रेण कपिलायाः पञ्चगव्यानि न पेयानि । नास्य विप्रद्वाराऽपि होमः । प्रायश्चित्तद्रव्यं

संकल्प्य दत्त्वोत्तराङ्गविष्णुश्राद्धगोदानानि दश दानानि कुर्यात् । इति स्त्रीशूद्र[प्रायश्चित्त]प्रयोगः ॥

अथ गोवधाद्येकैकपापे प्रायश्चित्तप्रयोगः—पर्षदं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणमेत् । विप्रैः किं ते कार्यमित्यादिपृष्टे गोवृषनिष्क्रयं संकल्प्य निधाय मयाऽमुकगोवधः कृतोऽथवा पलाण्डुगृञ्जनादिभक्षणं कृतं यद्वाऽमुकस्त्रीगमनं कृतं तत्प्रायश्चित्तमुपदिशन्तु भवन्त इति यथापापमुच्चार्य स्पष्टं वदेत् । ततः 'सर्वे धर्मविवेक्तारः' इत्यादि । कर्त्रा निबन्धपूजानुवादकपूजने कृते सभ्या अनुवादकमुखेन प्रायश्चित्तं कथयेयुः—त्वयाऽमुकगोवधः कृतस्तत्प्रायश्चित्तं त्रैमासिकव्रतं सप्तदशप्राजापत्यप्रत्याम्नायद्वारा वा सप्तदशगोदानतन्मूल्यदानेन वा पूर्वोत्तराङ्गसहितं त्वयाऽऽचरितव्यं तेन तव शुद्धिर्भविष्यतीत्यादि । यद्वा त्वया मत्याऽभ्यासेन पलाण्डुगृञ्जनं कुक्कुटमांसं वा भक्षितं तत्प्रायश्चित्तं यतिचान्द्रायणं पुनःसंस्कारसहितं प्राच्योदीच्याङ्गसहितमाचरणीयं तेन तव शुद्धिर्भविष्यतीत्यादि । एवमगम्यागमनादावूह्यम् । ततः कर्ता देशकालौ संकीर्त्य पर्षदुपदिष्टं गोवधप्रायश्चित्तं त्रैमासिकममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गसहितमहमाचरिष्ये [इति संकल्प्य] । ततो वपनदन्तधावनदशविधस्नानपूर्वाङ्गविष्णुश्राद्धगोदानाज्यहोमपञ्चगव्यप्राशनान्ते यथासंकल्पितं मुख्यप्रायश्चित्तं कृत्वोत्तराङ्गाणि कुर्यात् । इदं सामान्यम् । ततो विशेषोक्तं स्वामिमते गोदानपार्वणश्राद्धादि । एवमभक्ष्यभक्षणेऽपि पलाण्डुगृञ्जनकुक्कुटमांसादिभक्षणजनितपातकनिरासार्थं पर्षदुपदिष्टं पुनःसंस्कारसहितं यतिचान्द्रायणममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गसहितमाचरिष्य इति संकल्प्य क्षौरादि पञ्चगव्यप्राशनादि पूर्ववत्कृत्वा चान्द्रायणप्रत्याम्नायं पुनरुपनयनं च कृत्वोदीच्याङ्गानि कुर्यात् । एवमगम्यागमनादौ द्रष्टव्यम् । रहस्यप्रायश्चित्ते तु न पर्षदुपस्थानसभ्यानुवादकपूजनादिकम् । किंतु तत्प्रायश्चित्तं स्वयमेव ज्ञात्वाऽथवा व्याजान्तरेण किंचित्पृष्ट्वा रहस्योक्तं प्रायश्चित्तं स्वयमेव रहसि संकल्प्य महच्चेत्क्षौरसहितमन्यथा क्षौररहितमाचरेदिति ॥

इति श्रीमदनन्तोपाध्यायसूनुकाशीनाथोपाध्यायविरचितः सर्वप्रायश्चित्तप्रयोगः समाप्तः ॥

इति प्रायश्चित्तेन्दुशेखरः समाप्तः ॥



ॐ तत्सद्ब्रह्मणे नमः।

# कुण्डार्कः।

महामहोपाध्यायाभ्यंकरोपाह्ववासुदेवशास्त्रिविरचित-
कुण्डार्कोदयाभिधटीकासंवलितः।

भास्वन्तं नीलकण्ठं पितरमनुसरञ्शंकरो वक्ति कुण्डं
भूद्व्यब्ध्यष्टाङ्गहस्तं दशशतहवनात्तद्दशघ्नोत्तरे स्यात्।
हस्तः स्यादूर्ध्वबाहोः प्रपदगमखिनः पञ्चमोंऽशोऽङ्गुलं त-
त्सिद्धांशस्तद्गजांशो यव उरगलवस्तस्य यूकाऽष्टलिक्षा॥१॥

भास्वन्तमिति। श्रीशंकरनामा पण्डितः स्वकीयं पितरं भास्वन्तं सूर्यवद्देदीप्यमानं नीलकण्ठनामानमनुसरान्पितुः सकाशात्प्राप्तसांप्रदायिकविद्यानुसारेण वक्तुं प्रवृत्तः सन्कुण्डं वक्ति। कुण्डसंबन्ध्याकारविशेषायामविशेषादिविचारं करोति। कुण्डमाकारभेदेन दशविधम्। वृत्त १ अब्ज २ अर्धचन्द्र ३ योनि ४ त्र्यस्र ५ चतुरस्र ६ पञ्चास्र ७ षडस्र ८ सप्तास्र ९ अष्टास्र १० भेदात्। दशविधमपि च तत्प्रत्येकं पुनरायामभेदेन पञ्चविधम्। भूद्व्यब्ध्यष्टाङ्गहस्तम्। भूशब्देनैकसंख्योच्यते। अब्धिशब्देन च चतुःसंख्याऽङ्गशब्देन षट्संख्या चोच्यते। एकहस्तप्रमाणायामं द्विहस्तप्रमाणायामं चतुर्हस्तप्रमाणायामं षड्ढस्तप्रमाणायाममष्टहस्तप्रमाणायामं चेति पञ्चविधम्। यत्र दशशतसंख्याकं हवनं तत्रैकहस्तं कुण्डं भवति। तस्याश्च दशशतसंख्याया दशसंख्यया गुणने या संख्या संपद्यते तत्पर्यन्तहवन एकहस्तम्। तत आरभ्य द्विहस्तम्। तदपि लक्षपर्यन्तम्। तत आरभ्य दशलक्षपर्यन्तं चतुर्हस्तम्। तत आरभ्य कोटिपर्यन्तं षड्ढस्तम्। तदुत्तरमष्टहस्तम्। तत्र नास्त्यवधिः। दशघ्नं दशगुणितम्। हनधातुर्गुणनवाची। दशशतहवनात्प्राक्तु स्थण्डिलेन सिद्धिः। अत्रेदं बोध्यम्। दशघ्नोत्तर इत्युक्तेरग्नौ प्रक्षिप्तानि हविर्द्रव्याणि यथा कुण्डाद्बहिर्न गच्छेयुस्तथा कुण्डं कर्तव्यमित्यभिप्रायः। तेन किंचिन्न्यूनायुतहवनेऽपि द्विहस्तकुण्डसिद्धिः।

यत्र विल्वोदुम्बरफलसदृशानि स्थूलानि हविर्द्रव्याणि भवन्ति तत्रायु-
तात्मकतन्संख्याकान्यप्येकहस्ते कुण्डे न संमितानि भवेयुः । तथा
च हविर्द्रव्याणां संख्यां स्थूलत्वमणुत्वं यजमानहस्तप्रमाणं चाऽऽलक्ष्य
तदनुसारेणैकहस्तादिष्वन्यतमं कुण्डं विरच्यं भवति । सपादहस्तं सार्ध-
हस्तं वा न क्वापि कर्तव्यमिति । न च लाघवात्सर्वत्रैकविधमेवाष्टहस्तं
कुण्डं भवतु । तेनैव सर्वत्रेष्टं सिद्धं भवत्येव । इष्टं च कुण्डाद्बहिर्हविर्द्र-
व्यस्यानिर्गम इति वाच्यम् । तथा सत्यष्टहस्ते कुण्डे दशशतहवने
कुण्डतलप्रपूरणमपि न स्यात् । हविर्द्रव्यैः कुण्डं यथा कृत्स्नं प्रपूर्येत
गलपर्यन्तं वा पादोनं वा ततः किंचिन्न्यूनं वा तथा विधेयम् । अर्धा-
न्न्यूनं यदि पूर्येत तथा कदाऽपि न विधेयं भवति । उत्तरार्धे हस्ताङ्गु-
लयवयूकालिक्षाणां प्रमाणं प्रदर्श्यते—हस्त इति । प्रपदं पादाग्रम् ।
मखी यजमानः । सिद्धाश्चतुर्विंशतिः । गजा अष्टौ । उरगा अष्टौ ।
पादाग्रमात्रं भुवि प्रस्थाप्योर्ध्वमवस्थित ऊर्ध्वबाहुश्च यो यजमानस्तस्य
पादाग्रमारभ्य हस्ताग्रपर्यन्तं प्रमितस्य सूत्रस्य यः पञ्चमोंऽशः स
हस्तः । तस्य हस्तस्य यश्चतुर्विंशतितमोंऽशः सोऽङ्गुलम् । तस्याङ्गुलस्य
गजांशोऽष्टमांशो यवः । तस्य यवस्योरगलवोऽष्टमोंऽशो यूका । सा च
यूकाऽष्टलिक्षापरिमिता । यूकाया अष्टमांशो लिक्षेत्यर्थः ॥ १ ॥

छायान्तो मध्यशङ्कोः समभुवि विहितं मण्डलं येन गच्छे-
दुज्झेत्तत्स्थानयुग्मं तदनुगतगुणः प्राग्गुणोऽथोदगंशुः ।
तस्यान्ताभ्यां तदर्धाधिकगुणकृतयोर्मत्स्ययोर्मध्यतः स्या-
त्तत्संधेर्भ्रामयांशुं कुरु वलयमितः सर्वकुण्डप्रसिद्धिः ॥ २ ॥

अथ कुण्डस्य दिक्साधनार्थं प्राच्यादिसाधनमाह—छायान्त इति ।
छाया ‘ सावली ’ इति प्रसिद्धं भाषायाम् । शङ्कुः सूक्ष्मा लोहश-
लाका दारुमयी वा । गुणशब्दोंऽशुशब्दश्च सूत्रवाची । समायां भुवि
परितो वर्तुलं यथा भवेत्तथा मध्ये शङ्कुर्निधेयः । शङ्कुमूले सूत्रपाशं
प्रमुच्य परितः सूत्रभ्रामणेन वर्तुलं साधयेत् । शङ्कुप्रमाणापेक्षया
सूत्रप्रमाणं तृतीयेन भागेनाधिकमावश्यकमेव । न तु ततः कथमपि
न्यूनम् । तथाहि—शङ्कोश्छाया मध्याह्नात्पूर्वं पूर्वाह्णे पश्चिमतो दृश्यते ।

मध्याह्नादनन्तरमपराह्णे पूर्वस्यां दृश्यते । तथा शङ्कुच्छायाग्रं सूर्यगत्यनुसारेण पश्चिमतः समागत्य वर्तुलरेखां वर्तुलपश्चिमभागे स्पृष्ट्वा वर्तुलान्तः प्रविश्य मध्याह्नसंधिकाले शङ्कुसमीपमागत्य ततोऽपराह्णे वर्तुलपूर्वभागे वर्तुलरेखां स्पृष्ट्वा वर्तुलाद्बहिर्निर्गच्छति । वर्तुलस्य यच्छायाग्रप्रवेशकालिकं छायाग्रस्पर्शस्थानं तत आरभ्य च्छायाग्रनिर्गमनकालिकच्छायाग्रस्पर्शवर्तुलस्थानपर्यन्तं यत्सूत्रं तत्प्राचीसाधकं प्राक्सूत्रमित्युच्यते । प्राक्सूत्रमेव प्राग्गुण इत्युच्यते । अत्र यदि वर्तुलसाधकस्य शङ्कुवर्तुलान्तरसूत्रस्य प्रमाणं शङ्कुप्रमाणापेक्षया त्रिभागाधिकं न स्यात्तर्हि वर्तुलमल्पं स्यादिति धनुःस्थे सूर्ये वर्तुलाद्बहिरेवोत्तरेण च्छायाग्रं पश्चिमतः पूर्वस्यां गच्छेत् । मिथुनस्थे तु सूर्ये वर्तुलाद्बहिर्दक्षिणेन गच्छेदिति प्राचीसाधनं न स्यात् । यद्यपि शङ्कुप्रमाणापेक्षया भ्रामणसूत्रस्य प्रमाणमर्धेनाधिकं स्याद्द्विगुणं वा स्यात्तर्हि प्राचीसाधनं भवेत्तथाऽपि यावता लघुप्रमाणेन सिद्धिस्तावदत्राऽऽवश्यकतयोक्तं लाघवात् । यदि च भ्रामणसूत्रमतिमहत्स्यात्तर्हि प्रातश्छायाग्रं वर्तुलाद्बहिर्न दृश्येतेति । इदं चात्रावधेयम् । वर्तुलस्य पश्चिमे भागे पूर्वाह्णे जायमानो यश्छायाग्रस्पर्शः स मध्याह्नसंधिकालात्पूर्वं यावता कालेन भवति तावतैव कालेनान्यूनानतिरिक्तेन वर्तुलस्य पूर्वभागेऽपराह्णे छायाग्रस्पर्शो भवति । प्राक्पश्चिमतो निम्नोन्नतायां भुवि वर्तुलं चेदुक्तस्पर्शद्वये कालतो वैषम्यं दुर्निवारमिति प्राचीसाधनं न स्यात् । निम्नप्रदेशे छायाग्रगतेः शैघ्र्यं तथोन्नते प्रदेशे छायाग्रगतेर्मान्द्यं संदृश्यते । अतः समभुवीत्युक्तम् । अथैतत्प्राक्सूत्रमाश्रित्यैवोदीचीसाधकमुदक्सूत्रमुच्यते । उदगंशुरुदक्सूत्रम् । तस्य पूर्वोक्तस्य प्राक्सूत्रस्य यौ द्वावन्तौ, एकः पश्चिमान्तोऽपरः पूर्वान्तः, ताभ्यां द्वौ मत्स्यौ साधनीयौ । तथाहि—तादृशप्राक्सूत्रान्तद्वये प्रत्येकमेकः शङ्कुर्वर्तुलसाधक इति शङ्कुद्वयं वर्तुलद्वयसाधकं निधेयम् । वर्तुलद्वयसाधकभ्रामणसूत्रप्रमाणं च प्राक्सूत्रस्यार्धापेक्षया किंचिदधिकमावश्यकमेव । अन्यथा मत्स्योत्पत्तिर्न स्यात् । यद्यपि प्राक्सूत्रतुल्यप्रमाणग्रहणेऽपि मत्स्योत्पत्तिः स्यात्तथाऽपि गौरवमकारणं स्यात् । अतो यावदावश्यकं तावदत्रोक्तम् । एतद्वर्तुलद्वयं च पूर्णं नापेक्ष्यते । पश्चिमशङ्कोः परितो वृत्तस्य पूर्वार्धं पूर्वशङ्कोः परितो वर्तुलस्य पश्चिमार्धं चापे-

क्ष्यते । अनयोश्च पूर्वार्धपश्चिमार्धयोर्मिथः संधिर्दक्षिणत एक उत्तरत-श्चापर इति संधिद्वयं भवति । तत्र दक्षिणसंधिमारभ्योत्तरसंधिपर्यन्तं यत्सूत्रं स्यात्तदुदक्सूत्रमित्युच्यते । यश्च भूभाग उक्तयोः पूर्वार्धपश्चिमार्धयोर्द्वयोरन्तः प्रविशति तन्मत्स्यद्वयशरीरम् । तत्र प्राक्सूत्रादुत्तरो भाग एको मत्स्यो दक्षिणो भागश्चापरो मत्स्यः । संधिद्वयं च मत्स्यमुखद्वयम् । एवं प्राचीसाधकं प्राक्सूत्रमुदीचीसाधकमुदक्सूत्रं च साधितम् । प्राचीसाधनेनैव प्रतीच्यपि साधिता भवति । उदीचीसाधनेन दक्षिणा दिक् च साधिता भवति । अथैतत्सूत्रद्वयमाश्रित्य कुण्डरचनाप्रकार-माह—तत्संधेरिति । तयोः प्रागुदक्सूत्रयोर्यः संधिस्तत्र शङ्कुं निधाय तत्र स्वेष्टकुण्डविशेषानुसारिप्रमाणेन सूत्रेण वलयं कुरु । तेन च वल-येन सर्वविधकुण्डानि साधितानि भवन्तीत्यर्थः ॥ २ ॥

वृत्तेऽब्जे वलयोऽधिभैरधिपदह्याग्निः सपात्खानलो
दृग्वेदे सयवे रसात्रि सदलं सिद्धाः करामेऽकले ।
क्ष्मारामे सयवेऽधिपादधृतयोऽनङ्घ्रौ खरामे दलं
गोद्वावत्रियवत्रिभूरपदले ज्या निस्त्रियूकाः शिवाः ॥ ३ ॥

अथैकहस्तादिषु व्यासस्य भुजानां चाङ्गुलप्रमाणं वक्तव्यम् । तत्र लाघवादेकहस्ते कुण्डे व्यासभुजप्रमाणे कथिते सति द्विहस्तादिषु तदूह्वद्धया व्यासभुजप्रमाणज्ञानं सुलभं भवति । अतः प्रथमत एकहस्ते कुण्डे तत्प्रदर्श-यति—वृत्तेऽब्ज इति । एकहस्तमपि च कुण्डं वृत्ताब्जार्धचन्द्रयोनित्र्यस्रचतु-रस्रपञ्चास्रषडस्रसप्तास्राष्टास्रभेदेन दशविधम् । तत्र क्रमेण व्यासप्रमाणं त्र्यस्रादिषु व्यासप्रमाणं भुजप्रमाणं च दर्शयति । वृत्तं वर्तुलं कुण्डम् । अब्जं पद्माकारम् । वलयो वलयव्यासः । भशब्देन सप्तविंशतिसंख्योच्यते । संख्याशब्देन चेदृशेनात्र संख्येयमुच्यते । संख्येयानि चात्राङ्गुलान्येव । योग्यताबलात् । तत्र च विशेषणीभूतमाधिशब्देनोक्तमाधिक्यमङ्गुलावय-वैरेव कतिपयैः । अङ्गुलावयवाश्च यूका ग्राह्याः । न तु यवा नापि लिक्षाः । अग्रिमोपपत्त्यनुरोधात् । तत्र यूकानां संख्याऽपि योग्यताबलादेव निर्णेया भवति । पच्छब्देनाङ्गुलविशेषणान्तर्गतेनाङ्गुलचतुर्थांश उच्य-ते । एवं दलशब्देन तथाविधेनाङ्गुलार्धमुच्यते । अहयोऽष्टौ । अग्नयस्त्रयः ।

खं शून्यम् । अनलास्त्रयः । दृग्द्वौ । वेदाश्चत्वारः । रसाः षट् । सिद्धा-श्चतुर्विंशतिः । कश्चतुर्मुखः । तेन चतुःसंख्योच्यते । रामास्त्रयः । कला षोडशो भागः । स चाङ्गुलविशेषणान्तर्गतत्वादङ्गुलस्यैव । क्ष्मैका । धृतयोऽष्टादश । अङ्घ्रिश्चतुर्थांशः । स चाङ्गुलविशेषणान्तर्गतत्वादङ्-गुलस्यैव । दलमर्धम् । तच्चाङ्गुलविशेषणानन्तर्गतत्वान्नाङ्गुलस्य । किंतु प्रकृतस्ववाक्योपात्तखरामपदबोध्यसंख्याया एव । गावो नव । भूरेका । दलमर्धमङ्गुलस्य । अङ्गुलविशेषणान्तर्गतत्वात् । ज्या भुजाः । शिवा एकादश । अयमर्थः—वृत्तकुण्डे पद्मकुण्डे च पञ्चयूकाधिकैः सप्तविं-शत्यङ्गुलैः ( २७। ० ।५) संमितो वलयव्यासो भवति । भुजाभावा-त्तन्मानं नोक्तम् । आधिपदद्व्यग्निः । अर्धचन्द्राकारकुण्डे यूकात्रयाधि-कसपादाष्टात्रिंशदङ्गुलैः ( ३८ । २ । ३ )संमितो वलयव्यासो भवति। ज्यामानं चेदमेव । एकैव चात्र ज्या । व्यास एव भुजोऽत्रेत्युक्तत्वात् । सपात्खानलः । योनिकुण्डे यवद्वयाधिकत्रिंशदङ्गुलसंमितो(३०।२।०) वलयव्यासो भवति । योनिकुण्डे च ज्याद्वयम् । योन्याकारसंपादनाय प्रथमतस्त्र्यस्रसंपादनेऽपि तादृशत्र्यस्रान्तर्गताया उभयतः श्रोणिद्वय-स्पृष्टाया ज्यायाः पश्चाद्विलोपात् । अवशिष्टस्य ज्याद्वयस्य परिमाणं च वृत्तानुसारेण ( २६ । १ । ६ ) यूकाद्वयोनसपादषड्विंशत्यङ्गुल-संमितं ज्ञेयम् । दृग्वेदे सयवे रसात्रि सदलम् । इत उत्तरं सप्तम्यन्तप-देन वलयव्यासमानं प्रथमान्तपदेन भुजमानं चोच्यते । त्र्यस्रकुण्डे यवाधिकद्विचत्वारिंशदङ्गुलो ( ४२ । १ । ० ) वलयव्यासः । सार्ध-षट्त्रिंशदङ्गुला( ३६ । ४ । ० )स्तिस्रो ज्या भवन्ति । सिद्धाः करामेऽकले । चतुरस्रकुण्डे वलयव्यासो ( ३३ । ७ । ४ ) यूकाचतु-ष्टयसहितयवसप्तकसहितत्रयस्त्रिंशदङ्गुलसंमितः । अकले षोडशांशर-हिते करामे ३४ । अङ्गुलस्य षोडशांशश्च यूकाचतुष्टयं भवति । तत्र भुजमानं सिद्धाः २४ चतुर्विंशत्यङ्गुलात्मकं भवति । क्ष्मारामे सय-वेऽधिपादधृतयः । पञ्चास्रकुण्ड एकयवसहितैकत्रिंशदङ्गुलात्मकं वल-यव्यासमानम् ( ३१ । १ । ० ) । भुजमानं च यूकात्रयसहितसपादा-ष्टादशाङ्गुल( १८ । २ । ३ )संमितम् । अनङ्घ्रौ खरामे दलम् । षडस्रकुण्डे पादोनत्रिंशदङ्गुलसंमितो ( २९ । ६ । ० ) वलय-व्यासः । तादृशवलयव्यासमानस्य दलमर्धं ( १४ । ७ । ० ) भुज-

मानम् । गोद्वावत्रियवत्रिभूः । गोद्वाविति गोद्विशब्दस्य सप्तम्यन्तं पदम् । सप्तास्त्र एकोनत्रिंशदङ्गुलात्मको ( २९ । ० ) वलयव्यासः । अत्रियवा यवत्रयरहिता । त्रिभूस्त्रयोदश । भुजमानं पञ्चयवाधिकद्वादशाङ्गुल( १२ । ५ । ० )संमितम् । अपदले ज्या निस्त्रियूकाः शिवाः । गोद्वावित्यनुवर्तते । अष्टास्रेऽङ्गुलार्धरहितगोद्वि( २८।४।० )संमितो वलयव्यासः । भुजमानं च यूकात्रयरहिताः शिवाः । यूकात्रयरहितैकादशाङ्गुल( १० । ७ । ५ )संमितम् ॥ ३ ॥

एवं दशविधेऽप्येकहस्ते कुण्डे व्याससूत्रमानं भुजमानं चोक्तम् । अथ तदेव सूत्रमानं द्विहस्तादौ कियतांऽशेन वर्धनीयमिति तद्द्विघ्न इति पूर्वार्धेन दर्शयति—

द्विघ्नोऽब्धिघ्ने फलेंऽशुर्दलिनि विदशभेनाङ्घ्रिणेद्धो द्विनिघ्ने
त्र्यंशेन स्वाङ्घ्रिभाजा वियुगगुणलवस्वाङ्घ्रि तद्द्विघ्नमन्त्ये ।
कोट्यः पूर्वोत्तरांश्वोरिह वरुणदिशः पुच्छपार्श्वास्यपार्श्वा
अंसौ पार्श्वास्यमध्यावनुजघनयुगं मध्यतः पुच्छकुक्ष्योः ॥ ४ ॥

नन्वेकहस्ते कुण्डे यावत्परिमाणं व्याससूत्रं गृहीतं तद्द्विहस्ते कुण्डे द्विगुणं ग्राह्यं चतुर्हस्ते कुण्डे चतुर्गुणितं ग्राह्यमिति ज्ञायत एव तत्किमर्थमिदमुच्यत इति चेद् भ्रान्तोऽसि । एकहस्ते कुण्डे यावत्यवकाशे हविर्द्रव्याणि संमान्ति हविर्द्रव्यप्रक्षेपयोग्यो यावानवकाशस्तावतोऽवकाशस्य द्विगुणोऽवकाशो यस्मिन्कुण्डे भवति तत्कुण्डं द्विहस्तमिति ज्ञेयम् । न तु द्विहस्ते कुण्डे कुण्डस्याऽऽयामो द्विहस्तो भवति । एवमेव चतुर्हस्तादिषु ज्ञेयम् । तदित्थम् । समचतुरस्रोऽणुः काष्ठखण्डस्तादृशः कल्पनीयो यस्य पूर्वपश्चिमायामो दक्षिणोत्तरायामश्चाङ्गुलात्मको भवेत् । अथऊर्ध्वायामश्चैकहस्तात्मको भवेत् । एतादृशानि काष्ठान्येकहस्ते कुण्डे यदि मिथः संलग्नानि निवेश्यन्ते तर्हि तत्र षट्सप्तत्यधिका पञ्चशती तादृशानां काष्ठानां संमिता भवेत् । एतदेव ( ५७६ ) फलमित्युच्यते । हस्तो हि चतुर्विंशत्यङ्गुलात्मकः । तस्य वर्गश्चतुर्विंशत्या गुणिता चतुर्विंशतिः । सा च षट्सप्तत्यधिका पञ्चशत्येव भवति । यच्च द्विहस्तायामं कुण्डं तच्चतुर्हस्तमिति गीयते । एकहस्तापेक्षया चतुर्गुणितफलसद्भावात् ।

पूर्वपश्चिमतो दक्षिणोत्तरतश्च द्विहस्तायामे कुण्ड एकहस्तकुण्डतुल्याश्चत्वारो भागा भवन्ति । तथा च फल एकहस्तकुण्डफले-अब्धिघ्ने चतुर्गुणिते सति तत्रांगुरेकहस्तकुण्डमूलसूत्रं द्विघ्नः, द्विगुणितं कार्यम् । अष्टचत्वारिंशदङ्गुलात्मकं कार्यमित्यर्थः । तदेव चतुर्हस्तं कुण्डं विज्ञेयम् । तत्र हस्तचतुष्टयं चेत्थं ज्ञेयम् । पूर्वपश्चिमतो दक्षिणोत्तरतश्च द्विहस्तायामे कुण्डे मध्यगतया पूर्वपश्चिमरेखया भागद्वयं परिकल्प्य तत्रोत्तरभागे समचतुरस्रं हस्तद्वयं दक्षिणभागे च तथैवेत्येवं हस्तचतुष्टयं भवति । एतादृशे चतुर्हस्ते कुण्डे फलं चैकहस्तापेक्षया चतुर्गुणितं चतुरधिकशतत्रयाधिकसहस्रद्वयं भवति ( २३०४ ) । अस्मिंश्च फले दलिन्यर्थेनाधिके विवक्षिते सति कियता सूत्रेण कुण्डं विरच्यमित्याह—विदशमेनाङ्घ्रिणेद्ध इति । चतुर्हस्ते कुण्डेऽङ्गुश्चाष्टचत्वारिंशदङ्गुलात्मकः । स चाङ्घ्रिणा चतुर्थांशेन द्वादशात्मकेनेद्धो वर्धितः षष्ट्यङ्गुल( ६० )परिमितो भवति । स च चतुर्थांशो द्वादशात्मकः स्वकीयेन दशमेनांशेन रहितः कार्यः । द्वादशाङ्गुलसूत्रस्य दशमो भागश्चैकमङ्गुलमेको यव ईषदधिकाश्चतस्रो यूकाश्च । तेनोना षष्टिश्च तादृशयूकाचतुष्टयसहितयवषट्कसहिताष्टपञ्चाशदङ्गुलात्मिका ( ५८ । ६ । ४ ) भवति । इयदेव षड्ढस्ते कुण्डे सूत्रमित्यर्थः । अथ द्विहस्तं कुण्डं कियता सूत्रेण भवतीत्याह-द्विनिघ्ने त्र्यंशेन स्वाङ्घ्रिभाजा वियुगगुणलवस्वाङ्घ्रीति । एकहस्तकुण्डफले षट्सप्तत्यधिकपञ्चशत्यात्मके ( ५७६ ) द्विनिघ्ने द्विगुणिते सति द्विपञ्चाशदधिकैकशतयुतमेकसहस्रं ( ११५२ ) भवति । तादृशे फले विवक्षिते सत्येकहस्तकुण्डांशुश्चतुर्विंशत्यङ्गुलात्मकस्त्र्यंशेन स्वतृतीयांशेनाष्टाङ्गुलात्मकेन वर्धनीयः । न केवलं तावतैव । किंतु स त्र्यंशः स्वाङ्घ्रिभाक्स्वकीयचतुर्थांशेनाङ्गुलद्वयात्मकेन युतः । न केवलमेतावदेव किंतु सोऽङ्गुलद्वयात्मकश्चतुर्थांशो वियुगगुणलवः । स्वकीयेन चतुस्त्रिंशत्तमेनांशेन रहितः । अङ्गुलद्वयस्य चतुस्त्रिंशत्तमोऽशः स्थूलदृष्ट्येषदूनयूकाचतुष्टयमितः । तथा च द्विहस्ते कुण्डे व्याससूत्रं यूकाचतुष्टयसहितयवसप्तकसहितत्रयस्त्रिंशदङ्गुलात्मकं ( ३३ । ७ । ४ ) भवति । एतदेव च सूत्रं द्विघ्नं द्विगुणितं ( ६७ । ७ । ० ) सप्तयवाधिकसप्तषष्ट्यङ्गुलात्मकं सूत्रमष्टहस्ते कुण्डे विज्ञेयम् । अन्त्येऽष्टहस्ते । अष्टहस्ते फलं तु द्विहस्तकुण्डापेक्षया

चतुर्गुणितमष्टाधिकषट्शताधिकसहस्रचतुष्टयं(४६०८) भवति। अथोत्तरार्धेन परिभाषामाह—कोट्य इति। पूर्वांशुः प्राक्सूत्रम्। उत्तरांशुरुदक्सूत्रम्। तयोश्चतस्रः कोट्यः। प्रत्येकमग्रद्वयमिति चत्वार्यग्राणि। वरुणदिक् पश्चिमा। तत आरभ्य तेषां चतुर्णामग्राणां क्रमेण चतस्रः संज्ञा भवन्ति। प्राक्सूत्रस्य पश्चिमाग्रं पुच्छम्। उदक्सूत्रस्योत्तराग्रं पार्श्वम्। प्राक्सूत्रस्य पूर्वाग्रमास्यम्। उदक्सूत्रस्य दक्षिणाग्रं पार्श्वम्। अग्रचतुष्टयं चैतद्वृत्तरेखां स्पृशति। सूत्रद्वयानुसारेणैव वृत्तनिर्माणात्। पार्श्वास्ययोर्मध्यावंसौ। दक्षिणपार्श्वास्ययोर्मध्यो दक्षिणांसः। उत्तरपार्श्वास्ययोर्मध्य उत्तरांसः। तथा दक्षिणपार्श्वपुच्छयोर्मध्यो दक्षिणं जघनम्। उत्तरपार्श्वपुच्छयोर्मध्य उत्तरं जघनमिति ॥ ४ ॥

एवं कुण्डविरचनोपयोगिपूर्वपीठिकोक्ता। कुण्डं च वृत्ताब्जाद्याकारभेदेन दशविधमुक्तम्। वृत्तव्यासप्रमाणं भुजप्रमाणं च तत्तत्कुण्डानुसारेणोक्तम्। प्राक्सूत्राग्रद्वयमुदक्सूत्राग्रद्वयं च सर्वत्र वृत्तरेखास्पर्शीति दशविधेष्वपि कुण्डेषु वर्तुलं साधितम्। इदानीं तत्र तत्र वर्तुले ते त आकारविशेषाः कथं साधनीयास्तच्छ्लोकत्रयेणोच्यते—

संधेः पार्श्वास्यमध्यावनु ततगुणयोः कोटयोऽध्यस्रकोणा-
स्तस्मात्प्राग्ज्याङ्घ्रिदेशात्कुरु वलयमिहार्धेन्दुभं पश्चिमार्धम्।
श्रोण्यौ पुच्छाद्दलेन द्वयमुखगुणतस्त्र्यस्रिवृत्ते भगाभे
पुच्छश्रोणीगुणत्र्यं दलवलययुगं चाधिकं षड्भुजे तु ॥ ५ ॥

तत्र वृत्तकुण्डे वर्तुल एवाऽऽकार इति वर्तुलसाधनेनैव वृत्तकुण्डं साधितं भवति। वर्तुलानुसारेणैव तत्र कुण्डस्य विरचनीयत्वात्। अन्येषु नवविधेषु तत्तद्विशेषाकारप्रापणाय वर्तुलसाधनोत्तरं तत्र कर्तव्यतयाऽन्यत्किंचिद्वक्तव्यं भवति। तत्रोक्तिलाघवानुरोधेन क्रममुत्सृज्य प्रथमतश्चतुरस्रे कर्तव्यमुच्यते–संधेरिति प्रथमपादेन। पार्श्वास्यमध्यौ द्वावंसौ प्रागुक्तौ। तावनुलक्ष्य गुणौ ततौ कर्तव्यौ। सूत्रद्वयं देयमित्यर्थः। तच्च संधेः प्राक्सूत्रोदक्सूत्रयोर्यः संधिस्तमनुसृत्य देयम्। प्रागुदक्सूत्रयोर्यः संधिः स एवास्य सूत्रद्वयस्य संधिर्यथा भवेत्तथा सूत्रद्वयं देयम्। सूत्रद्वयस्य विस्तारश्च न वर्तुलाद्बहिः। प्रमाणाभावात्।

तथा च दक्षिणांसमारभ्योत्तरजघनपर्यन्तमेकं सूत्रम् । अपरं चोत्तरांसमारभ्य दक्षिणजघनपर्यन्तमर्थादेव सिध्यति । अस्य सूत्रद्वयस्य याश्चतस्रः कोटयोऽग्रचतुष्टयं तदेवाऽभ्यस्रस्य चतुरस्रकुण्डस्य कोणाः कोणचतुष्टयं भवति । तथा चोत्तरांसाद्दक्षिणांसपर्यन्तमेको भुजः । दक्षिणांसाद्दक्षिणजघनपर्यन्तं द्वितीयः । दक्षिणजघनादारभ्योत्तरजघनपर्यन्तस्तृतीयः । उत्तरजघनादारभ्योत्तरांसपर्यन्तश्चतुर्थ इति चतुरस्रकुण्डसिद्धिः ।

नन्वत्र पार्श्वास्यमध्यौ प्रसाध्य तदनुसारेण सूत्रद्वयं च प्रसाध्य तादृशसूत्रद्वयाग्रचतुष्टयानुसारेण भुजचतुष्टयं साधनीयमित्युक्तम् । तत्र माऽस्तु मध्ये सूत्रद्वयकल्पना । पार्श्वास्यमध्याविव पार्श्वपुच्छमध्यौ प्रसाध्य तदनुसारेण भुजचतुष्टयसिद्धेरिति चेत्सत्यम् । स्याद्भुजचतुष्टयसिद्धिः किंतु भुजसाम्यं नियमेन न सिध्येत् । कदाचिदीषद्वैषम्यं स्यात् । प्रथमतः पार्श्वास्ययोर्मध्यो यः सामान्यतः प्रकल्पितो भवति स स्थूलः । न तु सूक्ष्मः । मध्याद्यदास्यपर्यन्तमन्तरं यच्च मध्यात्पार्श्वपर्यन्तमन्तरं तयोरन्तरयोर्लिक्षयाऽपि वैषम्यं यत्र न जायत एतादृशो मध्यः सूक्ष्मः । सूक्ष्म एव चात्र भुजसाम्यसिद्ध्यर्थमपेक्षितो भवति । मध्यसंधिमनुलक्ष्य प्रागुदक्सूत्रयोः समान्तरेणोक्तसूत्रद्वयसाधने तु सूत्राग्रेण सूक्ष्मो मध्यः संलक्षितो भवति । प्राची दिक्च सामीचीन्येन साधिता भवति ।

अथार्धचन्द्रकुण्डे कर्तव्यमुच्यते—तस्मादिति द्वितीयपादेन । अर्धचन्द्रे प्रकृतिवृत्तव्याससूत्रप्रमाणं पूर्वमुक्तम् (३८।२।३) । तादृशसूत्रद्वयसंधिस्तस्मादित्यनेन निर्दिश्यते । तादृशसूत्रद्वयसंधेः प्राक्प्राच्यां दिशि ज्याङ्घ्रिदेशात्सूत्रचतुर्थांशप्रदेशाद्वलयं कुरु । सूत्रचतुर्थांशः पूर्वस्यां दिशि यत्र भागे भवति तत्र शङ्कुं निधाय व्याससूत्रार्धप्रमितेन ( १९।१।१।४ ) सूत्रान्तरेण वर्तुलं कार्यम् । तादृशवर्तुलस्य यत्पश्चिमार्धं तदर्धेन्दुभमर्धचन्द्रकुण्डं भवति । ननु किमर्थमिदं वर्तुलान्तरं साधितम् । प्रकृतिवृत्तस्यास्य वर्तुलस्य च परिमाणं सममेव । तथा च प्रकृतिवृत्तस्य पश्चिमार्धमेवार्धचन्द्रकुण्डमित्युक्त्यैव निर्वाह इति चेत्सत्यम् । सूत्रद्वयसंधिः कुण्डमध्ये यथा स्यादित्यभिप्रायेण वर्तुलान्तरसाधनात् । अथ त्र्यस्रे कुण्डे कर्तव्यं दर्शयति—श्रोण्यौ पुच्छाद्दलेन द्वयमुखगुणतस्त्र्यस्रिवृत्ते, इत्यनेन । त्र्यस्रिवृत्ते त्रिकोणकुण्डे । त्र्यस्रे वलयव्याससूत्रप्रमाणं प्रागुक्तम् ( ४२ । १ ) । तत्र वलये पुच्छात्पुच्छभागमध्याद्दलेन व्यास-

सूत्रार्धप्रमितेन सूत्रान्तरेण वर्तुलान्तरं कृत्वा श्रोण्यौ श्रोणिगतौ द्वौ
भागविशेषौ साधनीयौ । एको दक्षिणश्रोणिगतोऽपर उत्तरश्रोणिगतः ।
तादृशभागविशेषद्वयान्मुखमध्यभागपर्यन्तं सूत्रद्वयं देयम् । उभयतः श्रो-
णिभागविशेषस्पर्शि च तृतीयं सूत्रमर्थादेव सिद्धमिति तादृशसूत्ररूपभु-
जत्रयघटितं त्रिकोणं कुण्डं भवति । न च पुच्छपार्श्वमध्यभागस्य श्रोणि-
संज्ञा पूर्वमुक्तैवानुजघनयुगं मध्यतः पुच्छकुक्ष्योरित्यनेन । तथा च
किमर्थं पुनरत्र श्रोणिसाधनमिति वाच्यम् । श्रोणीशब्देन श्रोणीगतभा-
गविशेषोपलक्षणात् । तादृशभागविशेषसाधनं च भुजावधिद्योतनायाऽऽ-
वश्यकम् । ननु श्रोणितो मुखपर्यन्तं सूत्रं देयमित्येवोच्यतां किमर्थं
तदन्तर्गतभागविशेषसाधनमिति चेदुच्यते । श्रोणितो मुखपर्यन्तं सूत्रं
देयमित्युक्ते किं श्रोणिमध्यादथवा श्रोण्यग्रात् । आद्ये भुजसाम्यं न
स्यात् । त्र्यस्रकुण्डे ह्येकः पश्चिमतो भुजः पार्श्वद्वये च भुजद्वयमिति
भुजत्रयं समं साधनीयम् । तत्र पार्श्वभुजात्पश्चिमभुजस्तृतीयांशेन न्यूनः
स्यात् । द्वितीयेऽपि यदि पश्चिमाग्रं गृह्यते तर्हि ततोऽपि न्यूनः स्यात् ।
यदि पूर्वाग्रं गृह्यते तर्हि पार्श्वभुजापेक्षयाऽधिकः पश्चिमभुजः स्यात् ।
तथा च भुजत्रयसाम्याय तथोक्तिः । अथ योनिकुण्डे कर्तव्यमाह—
भगाभे पुच्छश्रोणीगुणज्यं दलवलययुगं चाधिकामित्यनेन । भगाभे
योनिकुण्डे । अत्र त्र्यस्रे वलयव्याससूत्रप्रमाणं प्रागुक्तम् ( ३० । २ ) ।
तादृशसूत्रानुसारिवर्तुले त्र्यस्रकुण्डवच्छ्रोणिद्वयान्तर्गतभागविशेषद्वयसा-
धनं त्र्यस्रोत्पादनं च कर्तव्यमेव । तदुत्तरमधिकं यत्कर्तव्यं तदत्रो-
च्यते । एतदुक्तिलाघवानुरोधेनैव त्र्यस्रकुण्डप्रकारकथनानन्तरं योनि-
कुण्डप्रकारकथनम् । पुच्छमध्यभागात्पूर्वसाधितश्रोण्यन्तर्गतभागविशेष-
पर्यन्तं सूत्रं देयं दक्षिणत उत्तरतश्च । तदेव च सूत्रमर्धवर्तुलस्य धनु
राकारस्य ज्या भवति । तादृशस्य तस्य दक्षिणसूत्रस्य मध्यभागे
शङ्कुं निधाय सूत्रार्धेन दक्षिणश्रोण्यन्तर्गतपूर्वसाधितभागविशेषमारभ्य
प्राक्सूत्रस्य पश्चिमाग्रपर्यन्तमर्धवर्तुलं धनुराकारं साधनीयम् । एवमुत्तर-
सूत्रेऽपि सूत्रमध्ये शङ्कुं निधाय सूत्रार्धेन प्राक्सूत्रस्य पश्चिमभागमार-
भ्योत्तरश्रोण्यन्तर्गतपूर्वसाधितभागविशेषपर्यन्तमर्धवर्तुलं धनुराकारं साध-
नीयम् । ततो योन्याकारं कुण्डं भवति । पुच्छश्रोणीगुण एव ज्या

यस्य तादृशं दलदलययुगमर्धवर्तुलद्वयं त्र्यस्रकुण्डापेक्षयाऽधिकमित्यर्थः। षड्भुजे तिवत्युत्तरश्लोकान्वयि ॥ ५ ॥

श्रोण्यंसौ पार्श्वतोऽर्धाद्युगभुजयुगलं दिग्विदिक्कोणकं स्याद्
बाह्यत्र्यस्राष्टकोनं त्रियवयुतनगत्र्यङ्गुलेऽष्टास्रि कुण्डम्।
सप्तास्रे दोस्त्रिदोर्दोर्दलमिभरसदृग्भागयुग्वक्त्रतो ज्याः
पञ्चास्रे द्विघ्नपार्श्वाननततिविवरं खाभ्रवेदांशयुक्तम् ॥ ६ ॥

षड्भुजे तु श्रोण्यंसौ पार्श्वतोऽर्धादित्यनेन षडस्रकुण्डे कर्तव्यं दर्शितम्। षडस्रे वलयव्याससूत्रप्रमाणं प्रागुक्तम् (२९।६)। उत्तरपार्श्वमध्ये शङ्कुं निधाय तत्र सूत्रार्धेन शङ्कोर्दक्षिणभागेऽर्धवर्तुलं कार्यम्। एतदर्धवर्तुलं च पार्श्वात्पूर्वतः पश्चिमतश्च प्रकृतिवर्तुलं स्पृशति। स्पर्शस्थानद्वयं च क्रमेणांसत्वेन श्रोणित्वेन च कल्पनीयम्। एवं दक्षिणपार्श्वेऽपि पार्श्वमध्ये शङ्कुं निधाय तत्र सूत्रार्धेन शङ्कोरुत्तरतोऽर्धवर्तुलं कार्यम्। एतदप्यर्धवर्तुलं पार्श्वात्पूर्वतः पश्चिमतश्च प्रकृतिवर्तुलं स्पृशति। स्पर्शस्थानद्वयं च क्रमेणांसत्वेन श्रोणित्वेन च कल्पनीयम्। एवं चोत्तरतः पार्श्वमध्यस्थानमंसान्तर्गतविशेषस्थानं श्रोण्यन्तर्गतविशेषस्थानं चेति स्थानत्रयम्। दक्षिणतोऽप्येवं स्थानत्रयमिति मिलित्वा प्रकृतिवृत्ते षट् स्थानानि संपन्नानि। तत्र प्रत्येकस्थानात्स्वानन्तरस्थानपर्यन्तं सूत्रं देयम्। तथा च षट् सूत्राणि भवन्ति। त एव च षड् भुजा इत्येवं षडस्रं कुण्डं भवति।

अत्रार्धवर्तुलेन श्रोण्यन्तर्गतोऽसान्तर्गतश्च यः स्थानविशेषः प्रकल्पितः स षण्णां भुजानां साम्यार्थम्। अन्यथा षड् भुजाः समा न स्युः। उदाहरणार्थं किंचित्प्रकल्प्यते। अष्टचत्वारिंशदङ्गुलात्मके वृत्ते षड् भागाः समाः प्रत्येकमष्टाङ्गुलात्मका भवन्ति। मुखं पुच्छमंसद्वयं पार्श्वद्वयं श्रोणिद्वयं चेत्यष्टाववयवाः प्रत्येकं षडङ्गुलात्मकाः। यदि च श्रोण्यंसयोरन्तर्गतः स्थानविशेषो न प्रकल्प्यते तर्हि पार्श्वमध्याच्छ्रोणीपर्यन्तो भागः श्रोणीमध्यपर्यन्तः श्रोण्यग्रपर्यन्तो वा स्यात्। आद्ये स भागः षडङ्गुल एव स्यात्। अन्त्ये पूर्वाग्रे गृह्यमाणे त्र्यङ्गुल एव स्यात्। पश्चिमाग्रे गृह्यमाणे नवाङ्गुलः स्यात्। न तु क्वाप्यष्टाङ्गुलः। अष्टाङ्गुल एव चेष्यते। स्थानविशेषे प्रकल्पिते तु स स्थानविशेषः श्रोण्यन्तर्गतपञ्चाङ्गुलान्ते भवति। श्रोण्यन्तर्गत एकाङ्गुलात्मको भागोऽवशिष्यते। तथा च पार्श्वगतमध्यात्पश्चिमतोऽङ्गुलत्रयं श्रोणीग-

ताङ्गुलपञ्चकं चेत्यङ्गुलाष्टकात्मक इष्टो भागः समप्रमाणः सिद्धो भवति । यद्यपि मुखमध्यं पुच्छमध्यं वाऽऽरभ्याष्टाङ्गुलात्मकाः सप्त षड् भागा भवेयुस्तथाऽपि तथा नोक्तम् । तथा सति पुच्छमध्ये योनिस्थाने भुजद्वयसंधिः स्यात् । स तु नेष्यते । नार्पयेत्कुण्डकोणेषु योनिमिति निषेधात् । यदि चांसमध्यं श्रोणिमध्यं वाऽऽरभ्य समाः षड् भागा अष्टाङ्गुलात्मकाः क्रियन्ते तर्हि यद्यपि भुजसंधौ योनिर्न भवति तथाऽपि भुजमध्ये न भवति । पश्चिमभुजस्य मध्यभाग एव सर्वकुण्डेषु योनिरिष्यते । अतः पार्श्वमध्यमारभ्यात्र षड् भागा उक्ताः ।

अथाष्टास्रकुण्डे कर्तव्यमाह—युगभुजेत्यादिना कुण्डमित्यन्तेन । अष्टास्रे प्रकृतिवृत्तव्याससूत्रप्रमाणं सार्धाष्टाविंशत्यङ्गुलात्मकं प्रागुक्तम् ( २८ । ४ ) । तत्र च साधारणपरिभाषया मुखांसपार्श्वश्रोणीपुच्छश्रोणीपार्श्वांससंज्ञाः क्रमेण भवन्ति । तत्रैकैको भागो यूकाचतुष्टयसहितसार्धाङ्गुलत्रयात्मकः ( ३ । ४ । ४ ) । प्राक्सूत्रस्य यत्पूर्वाग्रं तस्य दक्षिणतोऽर्धभागः ( १ । ६ । २ ) उत्तरतश्च तथैव ( १ । ६ । २ ) मिलित्वा मुखं ( ३ । ४ । ४ । ) भवति । तदनन्तरं क्रमेण तावन्त एवांसादयः सप्त भागाः कल्पनीयाः । तथा चैता मुखादयोऽष्टौ संज्ञा वर्तुलान्तर्गतस्य यावतो भागस्य भवन्ति तावत एव भागस्याग्रद्वयमभिलक्ष्य सूत्रे दत्तेऽष्टौ भुजाः समा भवन्ति । न किंचिदधिकं तत्र कर्तव्यं भवति । एवं यद्यप्यष्टास्रं कुण्डं साधितं स्यात्तथाऽपि तत्र स्थूलदृष्ट्या भुजसाम्ये साधितेऽपि सूक्ष्मं साम्यं नियमेन न सिध्येत् । कदाचिल्लिक्षया वैषम्यं स्यात् । इष्टं च सर्वत्रैव सूक्ष्मं भुजसाम्यम् । लिक्षयाऽपि वैषम्याभाव इति यावत् । तच्च सूक्ष्मं भुजसाम्यं वर्तुलान्तर्गतप्रागुदगैशान्याग्नेयीसूत्रानुरोधेन साधितेषु भुजेषु भवति । तथा च तथा साधनाय कर्तव्यविशेषोऽत्र प्रदर्शनीयः । किंतु स कर्तव्यविशेषः प्रागुक्तव्याससूत्रप्रमाणा( २८ । ४ )नुसारिवर्तुले न संभवति । अतोऽत्र व्याससूत्रस्य प्रमाणान्तरं दर्शयति—त्रियवयुतनगत्र्यङ्गुल ( ३७।३ ) इति ।

ननु कथमसंभवः । सार्धाष्टाविंशत्यङ्गुलानुसारि( २८ । ४ )-वर्तुलेऽपि वर्तुलान्तः प्रागुदगैशान्याग्नेयीसूत्रचतुष्टयं दत्त्वैकस्य सूत्रस्याग्रद्वयमित्येवं चतुर्णां सूत्राणां यान्यष्टावग्राणि तत्रैकस्मादग्रात्स्वा-

नन्तरापराग्रपर्यन्तमेको भुज इत्येवं समभुजाष्टकसंभव इति चेन्न । तथा सति योनिमध्ये भुजकोणपातप्रसङ्गात् । ननु त्रियवयुतनगत्र्यङ्गुलानुसारिवर्तुलेऽपि तथा प्रसङ्गः स्यादिति चेन्मैवं वादीः। यानि तत्राष्टावान्तरसूत्राग्राणि न ते भुजकोणा भवन्ति । किंत्वन्य एव । तथाहि—युगभुजा भुजचतुष्टयम् । तद्यथा चतुरस्रकुण्डे विदिक्कोणकं कृतं तथाऽत्रापि कर्तव्यम् । अपरं चात्र दिक्कोणकमपि तादृशं भुजचतुष्टयमपरं कर्तव्यम् । तत्र दिक्कोणकभुजस्य विदिक्कोणकभुजस्य च संधिर्भवति । एवं चतुर्णां दिक्कोणकानां भुजानां चतुर्षु विदिक्कोणकेषु प्रत्येकं संधिद्वयमित्येवं संध्यष्टकं भवति । एतत्संध्यष्टकमेवाष्टास्रे कुण्डेऽष्टानां भुजानां कोणाः । बाह्यकोणास्त्वेतदिष्टभुजाष्टकसिद्ध्यर्थं कल्पिताः । इष्टभुजसिद्ध्यनन्तरं पश्चात्ते विलोपनीयाः । तदेतद्बाह्यत्र्यस्राष्टकोनमित्यनेन दर्शितम् । इष्टभुज एव बाह्यत्र्यस्रस्य भूमिः । तस्योभयतो दिक्कोणपर्यन्तं चतुर्षु चतुर्षु च विदिक्कोणपर्यन्तं त्र्यस्रस्य भुजद्वयमित्येवं यद्बाह्यं त्र्यस्राष्टकं तेनोनमेतदष्टास्रं कुण्डं भवति । त्र्यस्राष्टकान्तर्गतो भाग उक्ताष्टास्रे कुण्डे न धर्तव्य इत्यर्थः । नन्वेतत्त्र्यस्राष्टकमिवापरमप्यत्र त्र्यस्राष्टकं संभवति । उक्तं त्र्यस्राष्टकमन्तर्भूमि बहिर्मुखम् । अपरं त्र्यस्राष्टकं चैतद्विपरीतं बहिर्भूम्यन्तर्मुखम् । वर्तुलरेखैव तस्य भूमिः । इष्टभुजकोणश्च तस्य मुखम् । द्वयोर्बहिर्मुखयोर्मध्ये एकमन्तर्मुखं त्र्यस्रं भवति एवं तान्यप्यष्टौ त्र्यस्राणि भवन्ति । तान्यपि च विलोपनीयान्येव। तथा च तादृशत्र्यस्राष्टकेनोनमित्यप्यत्र वक्तव्यं तत्कुतो नोक्तमिति चेत्सत्यम् । तदपि विलोपनीयमेव । किंत्वत्राष्टास्रे कर्तव्यतया यद्दिग्विदिक्कोणकं भुजचतुष्टययुगमुक्तं तदन्तर्गतं तन्न भवतीति तस्य ग्राह्यतया प्रसक्तिरेव नास्ति । अत एव त्र्यस्रचतुरस्रादिषु त्र्यस्रचतुरस्राच्च बहिर्भूतो यो वर्तुलान्तर्गतो भागस्तेनोनमित्येवं नोक्तम् ।

अथ सप्तास्रे कुण्डे कर्तव्यं दर्शयति—सप्तास्रे दोरित्यादिना तृतीयचरणेन । सप्तास्रे दोः, त्रिदोर्दोर्दलम्, इभरसदृग्भागयुक्, वक्त्रतः, ज्याः, इति पदानि । सप्तास्रे व्याससूत्रप्रमाणमेकोनात्रिंशदङ्गुलात्मकं ( २९ ) प्रागुक्तम् । त्रिदोर्दोः त्र्यस्रबाहुः । तस्य दलमर्धम् । त्र्यस्रबाहुश्च वृत्तव्यासवर्गस्य पादत्रयमूलेन भवति । प्रकृते वृत्तव्यासः (२९)

तस्य वर्गः ( ८४१ ) तस्य पादत्रयम् ( ६३०।६ ) तस्य मूलम् ( २५।१ ) तस्यार्धम् ( १२।४।४) एतत्त्रिदोर्दोर्दलम् । तच्चेभरसदृग्भागेन ( २६८ ) अष्टषष्ट्यधिकद्विशततमेनांशेन युक्तम् । अत्र च त्रिदोर्दोर्दलस्य ( १२।४४ ) अष्टषष्ट्यधिकद्विशततमोऽशः (२३८) यूकात्रयात्मकः । तेन युक्तं तद्दलं चेत्स्थूलमानेन पञ्चयवाधिकद्वादशाङ्गुल( १२।५ )परिमितं भवति । एतत्परिमितं सप्तास्रे दोर्भवति । पञ्चयवाधिकद्वादशाङ्गुलसंमितः सप्तास्रबाहुर्भवति । तावत्परिमितं सूत्रं चोभयतोऽग्रद्वयमात्रेण वृत्तरेखास्पर्शि देयम् । तच्च मुखमध्यमारभ्य देयम् । तदुक्तं वक्त्रतो ज्या इति । मुखमध्यमारभ्य पुनर्मुखमध्यपर्यन्तं तावन्तः सप्त बाहवो भवन्ति । चतुर्थस्य बाहोर्मध्ये योनिरिति न योनौ भुजकोणपातप्रसङ्गः ।

अथ पञ्चास्रे कुण्डे कर्तव्यं दर्शयति—पञ्चास्रे द्विघ्नेत्यादिना चतुर्थचरणेन । पञ्चास्रे व्याससूत्रप्रमाणं प्रागुक्तम् ( ३१ । १ ) । द्विघ्नं द्विगुणितं यत्पार्श्वाननं ततिश्च । तयोर्यद्विवरमन्तरं तच्च खाभ्रवेदांशेन चतुःशततमेनांशेन युक्तं यावद्भवति तावान्पञ्चास्रे बाहुर्भवति । व्यासवर्गार्धमूलं पार्श्वाननम् । व्यासस्ततिः । अत्र व्यासः ( ३१ । १ ) तस्य वर्गः ( ९६८ । ६ ) तदर्धम् ( ४८४ । ३ ) तस्य मूलं ( २२ ) इदं द्विगुणितम् ( ४४ ) । तथा व्यासः ( ३१ । १ ) स द्विगुणितः ( ६२ । २ ) तयोर्द्विगुणितपार्श्वानन( ४४ )तत्यो( ६२ । २ )र्यदन्तरं द्वियवाधिकाष्टादशाङ्गुलसंमितम् ( १८ । २ ) । तच्च पुनः स्वीयेन चतुःशततमेनांशेन युक्तम् । यवद्वयाधिकाष्टादशाङ्गुलस्य चतुःशततमोऽशः स्थूलमानेन यूकात्रयात्मकः । तेन युक्तं ( १८ । २ । ३ ) यूकात्रयाधिकसपादाष्टादशाङ्गुलसंमितं भवति । एतदेव पञ्चास्रे कुण्डे भुजप्रमाणम् । एतत्प्रमाणकं सूत्रं गृहीत्वा मुखमध्यमारभ्याग्रद्वयमात्रेण वृत्तरेखास्पर्शि सूत्रपञ्चकं पुनर्मुखमध्यपर्यन्तं देयम् । त एव च पञ्च बाहवः । अत्रापि तृतीयस्य बाहोर्मध्ये योनिरिति न योनौ भुजकोणपातप्रसङ्गः ॥ ६ ॥

वृत्तव्यासे नवांशे द्विचतुरिभलवैः कर्णिकाकेसरान्तः-
पत्रक्ष्मामण्डलानि स्युरवधिवलयं स्यात्सतत्त्वांशपङ्क्त्या ।

